शिवपूजनविधिः

शिवमहिम्नःस्तोत्रम्

# स्तुतिसंचयः



# श्रीशिवपूजनविधिः।
# श्रीशिवमहिम्नःस्तोत्रम्
# स्तुतिसंचयः

•

परमपूज्य निरञ्जनपीठाधीश्वर आचार्य महामण्डलेश्वर
श्री १००८ श्री यतीन्द्र स्वामी कृष्णानन्द गिरि जी
की आज्ञा से

मेहता चैरिटेबल प्रज्ञालय ट्रस्ट, दिल्ली

द्वारा

श्री त्र्यंबकेश्वर—नासिक में सिंहस्थ कुम्भमहापर्व के
अवसर पर निःशुल्क वितरणार्थ प्रकाशित
श्रावणी पूर्णिमा
सं० २०४८

# दो शब्द

भारतीय संस्कृति में प्रत्येक व्यक्ति के वर्णाश्रमोचित आचार-व्यवहार पर बल दिया गया है। व्यक्तिगत जीवन में समस्त ईषणाओं का त्याग कर अन्य आश्रमों के मार्गदर्शक के रूप में प्रतिष्ठित दशनाम संन्यासियों की प्राचीन परम्परा के अनुसार वेदान्ताध्ययन की पद्धति को अक्षुण्ण बनाये रखने में मठों और पीठों की महत्त्वपूर्ण भूमिका रही है। आचार्यों के निवास-स्थान तथा कार्यक्षेत्र के मुख्यालय के रूप में पीठों और धर्म एवं दर्शनशास्त्र के अध्येताओं के छात्रावास के रूप में मठों का सनातन संस्कृति के अभ्युत्थान में सदा से ही विशिष्ट योगदान रहा है। काशी स्थित श्री दक्षिणामूर्ति मठ एवं ध्रुवेश्वर मठ का भारतवर्ष के प्राचीन मठों की शृंखला में विशेष महत्त्व है। यह दशनाम संन्यास-सम्प्रदायान्तर्गत निरञ्जनपीठ भी है।

यहाँ की शताब्दियों से चली आ रही परम्परा में परमपूज्य प्रातः-स्मरणीय ब्रह्मलीन आचार्य महामण्डलेश्वर श्री १००८ स्वामी नृसिंह गिरिजी महाराज का कार्यकाल अत्यधिक महत्त्वपूर्ण रहा। आपकी अहैतकी कृपा से ही वाराणसी, दिल्ली एवं नापासर में संस्कृत महाविद्यालयों की स्थापना हुई। काशी से बाहर निकल कर सुदूरवर्ती राजस्थान में एवं दिल्ली, कलकत्ता जैसे महानगरों में संस्था के कार्यक्षेत्र का विस्तार आपकी ही कृपा का फल है। उनके द्वारा आचार्य पद पर स्थानापन्न परमपूज्य आचार्य महामण्डलेश्वर अद्वैतसिंहासनस्थ निरञ्जनपीठाधीश्वर श्री १००८ स्वामी महेशानन्द गिरिजी महाराज द्वारा माउण्ट आबू में स्थापित शङ्कर मठ साधना एवं वेदान्ताध्ययन का एक विशिष्ट केन्द्र बना है। प्राच्य एवं पाश्चात्य—दोनों दार्शनिक परम्पराओं के वेत्ता महाराजजी वर्तमान संन्यासी जगत् में मूर्धन्य विद्वान् के रूप में प्रतिष्ठित हैं। आपके द्वारा आचार्य पद पर अपने उत्तराधिकारी के रूप में स्थानापन्न परमपूज्य आचार्य महामण्डलेश्वर निरञ्जनपीठाधीश्वर श्री १००८ यतीन्द्र स्वामी कृष्णानन्द गिरिजी महाराज के निर्देशन में वाराणसी, दिल्ली, पुष्कर, नापासर आदि विभिन्न मठों, आश्रमों एवं संस्कृत विद्यालयों का संचालन सुचारु रूप से हो रहा है। बालसुलभ सहज स्वभाव, आकर्षक स्नेहपूर्ण व्यक्तित्व के कारण भक्तों पर आपका अनूठा प्रभाव है।

इस वर्ष सिंहस्थ कुम्भपर्व के अवसर पर त्र्यंबकेश्वर में चातुर्मास्य-निवास करने का परमपूज्य महामण्डलेश्वरजी महाराज का संकल्प इस पुस्तक के प्रकाशन का निमित्त बना है।

नित्य नैमित्तिक पूजाओं के समय कहने योग्य विशिष्ट स्तुतियों का संकलन 'स्तुतिसञ्चयः' के नाम से किया गया है। प्रारम्भ में शिवपूजनविधि एवं सान्वयार्थ शिवमहिम्नःस्तोत्र, कैवल्योपनिषद्, दक्षिणामूर्तिस्तोत्र आदि का भी संकल किया गया है।

आशा है कि श्रद्धालुओं के नित्यपाठ एवं नैमित्तिक कार्यों में यह संकलन सहायकारी सिद्ध होगा।

•

## ❀ प्रातःकालीन नित्यकर्म ❀

सूर्योदय से प्रातः दो घण्टे पहले अर्थात् चार बजे से ब्राह्म मुहूर्त होता है। इसमें सोने से पाप ही होता है यह बात नहीं, किन्तु पहले किया हुआ पुण्य भी क्षीण होता है। शास्त्रों में कहा है—

"ब्राह्मे मुहूर्ते या निद्रा सा पुण्यक्षयकारिणी"।

अतः इस अवसर पर उठना चाहिये और उठते ही बिस्तर पर बैठ कर मांगलिक श्लोक बोलने चाहिये।

मङ्गलं भगवान् विष्णुर्मङ्गलं गरुडध्वजः।
मङ्गलं पुण्डरीकाक्षः मङ्गलायतनो हरिः॥

गोविन्द गोविन्द हरे मुरारे गोविन्द गोविन्द मुकुन्द कृष्ण।
गोविन्द गोविन्द रथांगपाणे गोविन्द गोविन्द नमो नमस्ते॥

ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च।
गुरुश्च शुक्रः शनिराहुकेतवः सर्वे ग्रहाः शान्तिकरा भवन्तु॥

अश्वत्थामा बलिर्व्यासो हनुमांश्च बिभीषणः।
कृपः परशुरामश्च सप्तैते चिरजीविनः॥
सप्तैतान् संस्मरेन्नित्यं मार्कण्डेयमथाष्टमम्।
जीवेद् वर्षशतं सोऽपि सर्वव्याधिविवर्जितः॥
अहिल्या द्रौपदी तारा कुन्ती मन्दोदरी तथा।
पञ्चकन्यां स्मरेन्नित्यं महापापविनाशनम्॥
अयोध्या मथुरा माया काशी कांची ह्यवन्तिका।
पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः॥
एतानि प्रातरुत्थाय संस्मरिष्यन्ति ये नराः।
सर्वपापैः प्रमुच्यन्ते स्वर्गलोकमवाप्नुयुः॥

पहले अपने हाथ का दर्शन करें

कराग्रे वसते लक्ष्मीः करमध्ये सरस्वती।
करमूले स्थितो विष्णुः प्रभाते करदर्शनम्॥

अर्थ—हाथ के अगले भाग में लक्ष्मी, मध्य भाग में सरस्वती और मूल भाग में विष्णु रहते हैं। अतः प्रातःकाल हाथ का दर्शन करना चाहिये।

**पश्चात्** बिस्तर से उठ कर निम्न प्रार्थना करके पृथ्वी पर पैर रखें ।

समुद्रवसने देवि ! पर्वतस्तनमण्डले ।
विष्णुपत्नि ! नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥

**सूर्योदय** से पहले स्नान अवश्य करना चाहिये । स्नान से पहले सब तीर्थों का **आवाहन** करके फिर स्नान करें ।

पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा ।
आगच्छन्तु पवित्राणि स्नानकाले सदा मम ॥
गंगे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥
गंगा गंगेति यो ब्रूयाद् योजनानां शतैरपि ।
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥

•

## वेदान्तप्रातःस्मरणस्तोत्रम्

प्रातः स्मरामि हृदि संस्फुरदात्मतत्त्वं
सच्चित्सुखं परमहंसगतिं तुरीयम् ।
यः स्वप्नजागरसुषुप्तमवैति नित्यं
तद्ब्रह्म निष्कलमहं न च भूतसङ्घः ॥१॥

प्रातर्भजामि मनसा वचसामगम्यं
वाचो विभान्ति निखिला यदनुग्रहेण ।
यं नेति नेति वचनैर्निगमा अवोचं-
स्तं देवदेवमजमच्युतमाहुरग्र्यम् ॥२॥

प्रतिर्नमामि तमसः परमर्कवर्णं
पूर्णं सनातनपदं पुरुषोत्तमाख्यम् ।
यस्मिन्निदं जगदशेषमशेषमूर्तौ
रज्ज्वां भुजंगम इव प्रतिभासितं वै ॥३॥

श्लोकत्रयमिदं पुण्यं लोकत्रयविभूषणम् ।
प्रातःकाले पठेद्यस्तु स गच्छेत्परमं पदम् ॥

•

## गणेशप्रातःस्मरणम्

प्रातः स्मरामि गणनाथमनाथबंधुं सिंदूरपूरपरिशोभितगंडयुग्मम् ।
उद्दंडविघ्नपरिखंडनचंडदंडमाखंडलादिसुरनायकवृन्दवंद्यम् ॥१॥
प्रातर्नमामि चतुराननवंद्यमानमिच्छानुकूलमखिलं च वरं ददानम् ।
तं तुन्दिलं द्विरसनप्रिययज्ञसूत्रं पुत्रं विलासचतुरं शिवयोः शिवाय ॥२॥
प्रातर्भजाम्यभयदं खलु भक्तशोकदावानलं गणविभुं वरकुंजरास्यम् ।
अज्ञानकाननविनाशनहव्यवाहमुत्साहवर्धनमहं सुतमीश्वरस्य ॥३॥
श्लोकत्रयमिदं पुण्यं सदासाम्राज्यदायकम् ।
प्रातरुत्थाय सततं यः पठेत्प्रयतः पुमान् ॥४॥
स सर्वपापनिर्मुक्तः गणेशस्य प्रसादतः ॥५॥

•

## विष्णुप्रातःस्मरणम्

प्रातः स्मरामि भवभीतिमहार्तिशांत्यै नारायणं गरुडवाहनमब्जनाभम् ।
ग्राहाभिभूतवरवारणमुक्तिहेतुं चक्रायुधं तरुणवारिजपत्रनेत्रम् ॥१॥
प्रातर्नमामि मनसा वचसा च मूर्ध्ना पादारविन्दयुगलं परमस्य पुंसः ।
नारायणस्य नरकार्णवतारणस्य पारायणप्रवणविप्रपरायणस्य ॥२॥
प्रातर्भजामि भजतामभयंकरं तं प्राक्सर्वजन्मकृतपापभयापहत्यै ।
यो ग्राहवक्त्रपतितांघ्रिगजेंद्रघोरशोकप्रणाशमकरोद्धृतशंखचक्रः ॥३॥
श्लोकत्रयमिदं पुण्यं प्रातःकाले पठेत्तु यः ।
लोकत्रयगुरुस्तस्मै दद्यादात्मपदं हरिः ॥४॥

•

## श्रीहरिप्रातःस्मरणम्

ग्राहग्रस्ते गजेंद्रे रुवति सरभसं तार्क्ष्यमारुह्य धावन्
व्याघूर्णन्माल्यभूषावसनपरिकरो मेघगंभोरघोषः ।
आबिभ्राणो रथांगं शरमसिमभयं शंखचापौ सखेटो
हस्तैः कौमोदकीमप्यवतु हरिरसावंहसां संहतेर्नः ॥१॥
नक्राक्रांते करींन्द्रे मुकुलितनयने शूलमूलेऽतिखिन्ने
नाहं नाहं न च भवति पुनस्तादृशो मादृशेषु ।
इत्येवं त्यक्तहस्ते सपादि सुरगणे भावशून्ये समस्ते
मूलं यत्प्रादुरासीत्स दिशतु भगवान् मंगलं संततं नः ॥२॥

•

## शिवप्रातःस्मरणम्

प्रातः स्मरामि भवभीतिहरं सुरेशं गङ्गाधरं वृषभवाहनमंबिकेशम् ।
खट्वांगशूलवरदाभयहस्तमीशं संसाररोगहरमौषधमद्वितीयम् ॥१॥
प्रातर्नमामि गिरिशं गिरिजार्धदेहं सर्गस्थितिप्रलयकारणमादिदेवम् ।
विश्वेश्वरं विजितविश्वमनोभिरामं संसाररोगहरमौषधमद्वितीयम् ॥२॥
प्रातर्भजामि शिवमेकमनंतमाद्यं वेदांतवेद्यमनघं पुरुषं महान्तम् ।
नामादिभेदरहितं षड्भावशून्यं संसाररोगहरमौषधमद्वितीयम् ॥३॥
प्रातः समुत्थाय शिवं विचिंत्य श्लोकत्रयं येऽनुदिनं पठन्ति ।
ते दुःखजातं बहुजन्मसंचितं हित्वा पदं यांति तदेव शंभोः ॥४॥

•

## सूर्यप्रातःस्मरणम्

प्रातः स्मरामि खलु तत्सवितुर्वरेण्यं रूपं हि मण्डलमृचोऽथ तनुर्यजूंषि ।
सामानि यस्य किरणाः प्रभवादिहेतुं ब्रह्माहरात्मकमलक्ष्यमचिन्त्यरूपम् ॥१॥
प्रातर्नमामि तरणिं तनुवाङ्मनोभिर्ब्रह्मेन्द्रपूर्वकसुरैर्नुतमर्चितं च ।
वृष्टिप्रमोचनविनिग्रहहेतुभूतं त्रैलोक्यपालनपरं त्रिगुणात्मकं च ॥२॥
प्रातर्भजामि सवितारमनन्तशक्तिं पापौघशत्रुभयरोगहरं परं च ।
तं सर्वलोककलनात्मककालमूर्तिं गोकण्ठबन्धनविमोचनमादिदेवम् ॥३॥
श्लोकत्रयमिदं भानोः प्रातः प्रातः पठेत्तु यः ।
स सर्वव्याधिनिर्मुक्तः परं सुखमवाप्नुयात् ॥४॥

•

## ललितापंचकम्

प्रातः स्मरामि ललितावदनारविंदं बिंबाधरं पृथुलमौक्तिकशोभिनासम् ।
आकर्णदीर्घनयनं मणिकुण्डलाढ्यं मंदस्मितं मृगमदोज्ज्वलफालदेशम् ॥१॥
प्रातर्भजामि ललिताभुजकल्पवल्लीं रक्तांगुलीयलसदंगुलिपल्लवाढ्याम् ।
माणिक्यहेमवलयांगदशोभमानां पुण्ड्रेक्षुचापकुसुमेषुसृणीर्दधानाम् ॥२॥
प्रातर्नमामि ललिताचरणारविंदं भक्तेष्टदाननिरतं भवसिंधुपोतम् ।
पद्मासनादिसुरनायकपूजनीयं पद्मांकुशध्वजसुदर्शनलांछनाढ्यम् ॥३॥
प्रातः स्तुवे परशिवां ललितां भवानीं त्रय्यंतवेद्यविभवां करुणानवद्याम् ।
विश्वस्य सृष्टिविलयस्थितिहेतुभूतां विद्येश्वरीं निगमवाङ्मनसातिदूराम् ॥४॥
प्रातर्वदामि ललिते तव पुण्यनाम कामेश्वरीति कमलेति महेश्वरीति ।
श्रीशांभवीति जगतां जननी परेति वाग्देवतेति वचसा त्रिपुरेश्वरीति ॥५॥

यः श्लोकपंचकमिदं ललितांबिकायाः सौभाग्यदं सुललितं पठति प्रभाते।
तस्मै ददाति ललिता झटिति प्रसन्ना विद्यां श्रियं विमलसौख्यमनंतकीर्तिम् ॥६॥
इति ललितापञ्चकम् ॥

## श्रीशाकम्भरीप्रातःस्मरणस्तोत्रम्

प्रातः स्मरामि तव शंकरि वक्त्रपद्मं कांतालकं मधुरमंदहसं प्रसन्नम्।
काश्मीरदर्पमृगनाभिलसल्ललाटं लोकत्रयाभयदचारुविलोचनाढ्यम् ॥१॥
प्रातर्भजामि तव शंकरि हस्तवृंदं माणिक्यहेमवलयादिविभूषणाढ्यम्।
घंटात्रिशूलकरवालसुपुस्तखेटपात्रोत्तमांगडमरूल्लसितं मनोज्ञम् ॥२॥
प्रातर्नमामि तव शंकरि पादपद्मं पद्मोद्भवादिसुमनोगणसेव्यमानम्।
मंजुक्वणत्कनकनूपुरराजमानं नंदारुवृंदसुरवीरुधमार्यहृद्यम् ॥३॥
प्रातः स्तुवे च तव शंकरि दिव्यमूर्तिं कादंबकाननगतां करुणारसार्द्राम्।
कल्याणधाम नवनीरदनीलभासां पंचास्ययानलसितां परमार्तिहंत्रीम् ॥४॥
प्रातर्वदामि तव शंकरि दिव्यनाम शाकंभरीति ललितेति शतेक्षणेति।
दुर्गेति दुर्गममहासुरनाशिनीति श्रीमंगलेति कमलेति महेश्वरीति ॥५॥
यः श्लोकपंचकमिदं पठति प्रभाते शाकंभरीप्रियकरं दुरितौघनाशम्।
तस्मै ददाति शिवदा वनशंकरी सा विद्यां प्रजां श्रियमुदारमतिं सुकीर्तिम् ॥६॥
इति श्रीशाकंभरीप्रातःस्मरणस्तवः संपूर्णः ॥

पूर्वाभिमुख होकर पवित्र आसन पर बैठें और इसके बाद आसन शुद्धि करें।

ॐ पृथ्वि त्वया धृता लोका देवि ! त्वं विष्णुना धृता।
त्वं च धारय मां देवि! पवित्रं कुरु चासनम् ॥

इसके बाद तीन बार आचमन करे।

ॐ केशवाय नमः ॐ नारायणाय नमः ॐ माधवाय नमः।

इसके बाद प्राणायाम करे।

ॐ भू ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम्
ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचो-
दयात्, ॐ आपो ज्योती रसोमृतम् ब्रह्म भूर्भुवः स्वरोम्।

इसके बाद रुद्राक्ष की माला धारण करे। अथवा तुलसीमाला या चन्दन की माला भी धारण की जा सकती है।

ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् उर्वारुकमिव बन्धनान्मृत्यो-र्मुक्षीयमाऽमृतात्।

इसके बाद निम्नलिखित मन्त्र से भस्म को अभिमन्त्रित कर के धारण करें—

ॐ अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वं ह वा इदं भस्म मन एतानि चक्षूंषि भस्मानि ।

'ॐ नमः शिवाय' मन्त्र का जप करते हुए यथोचित अंगों पर भस्म धारण करे ।

इसके उपरान्त अंगों का न्यास करके गायत्री मन्त्र का जप नित्य करना चाहिये । नित्य सन्ध्या में उत्तम प्रकार की सन्ध्या का वर्णन शास्त्र में इस प्रकार वर्णित है—

उत्तमा तारकोपेता मध्यमा लुप्ततारका ।
अधमा सूर्यसहिता प्रातःसन्ध्या त्रिधा स्मृता ॥

सूर्यनारायण के उदय होने से पहले आकाश में तारे विद्यमान हों, ऐसे समय में सन्ध्योपासना करना उत्तम है । तारागण के लुप्त होने पर मध्यम और सूर्य उदय होने के बाद सन्ध्या करना अधम माना गया है ।

### अङ्गों का न्यास

ॐ हृदयाय नमः, ॐ भूः शिरसे स्वाहा, ॐ भुवः शिखायै वषट्, ॐ स्वः कवचाय हुम्, ॐ भूर्भुवः नेत्रत्रयाय वौषट, ॐ भूर्भुवः स्वः अस्त्राय फट् ।

इसके बाद गायत्री मन्त्र का यथाशक्ति जप करें । अथवा स्वाभिमत मन्त्र का जप करें ।

इस के बाद अपने गुरुदेव तथा इष्टदेव का चन्दन पुष्पादि से पूजन करें—

ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥

इसके बाद सूर्य भगवान् को अर्घ्य प्रदान करें—

ॐ एहि सूर्य सहस्रांशो तेजोराशि जगत्पते ।
अनुकम्पय मां भक्त्या गृहाणार्घ्यं दिवाकर ॥

•

## * शिवपूजनविधिः *

( मन्त्रों, स्तोत्रों एवं उपचारों का क्रम परमपूज्य निरञ्जनपीठाधीश्वर आचार्य महामण्डलेश्वर श्री १००८ स्वामी यतीन्द्र कृष्णानन्द गिरि जी महाराज द्वारा किये जानेवाले दैनिक शिवपूजन के अनुसार है ।)

### स्वस्तिवाचनम्

निम्नलिखित मन्त्रों द्वारा स्वतिवाचन करना चाहिए —

हरिः ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ।। पृषदश्वा मरुतः पृश्निमातरः शुभं यावानो विदथेषुजग्मयः।। अग्निर्जिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसा गमन्निह ।। भद्रङ्कर्णेभिः श्रृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः।। स्थिरैरङ्गैस्तुष्टुवाᳬसस्तनूभिर्व्यशेमहि देवहितं यदायुः।। शतमिन्नु शरदो अन्तिदेवायत्रानश्चक्रा जरसन्तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मानो मध्यारीरिषतायुर्गन्तोः ।। अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।। व्विश्वेदेवा अदितिः पञ्चजना अदितिर्ज्जातमदितिर्ज्जनित्वम् ।। द्यौः शांतिरन्तरिक्षᳬशांतिः पृथिवी शांतिरापः शांतिरोषधयः शांतिः ।। व्वनस्पतयः शांतिर्व्विश्वेदेवाः । शांतिर्ब्रह्म शांतिः सर्व्वᳬशांतिः शांतिरेव शांतिः सा मा शांतिरेधि।। यतोयतः समीहसे ततो नोऽअभयङ् कुरु शन्नः कुरु प्रजाभ्यो भयन्नः पशुभ्यः ।।

सुशांतिर्भवतु ।।

### प्रार्थना

वक्रतुण्डमहाकाय कोटिसूर्यसमप्रभ ।
निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ।।१।।
सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः।
लम्बोदरश्च विकटो विघ्ननाशो विनायकः ।।२।।
धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः।
द्वादशैतानि नामानि यः पठेच्छृणुयादपि ।।३।।
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।
संग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ।।४।।
शुक्लांबरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनन्ध्यायेत् सर्वविघ्नोपशांतये ।।५।।

अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ।
सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥६॥
सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥७॥
सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।
येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः ॥८॥
तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव लक्ष्मीपते तेंऽघ्रियुगं स्मरामि ॥९॥
लाभस्तेषाञ्जयस्तेषाङ्कुतस्तेषाम्पराजयः ।
येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥१०॥
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥११॥
अनन्याश्चिन्तयंतो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥१२॥
स्मृतेः सकलकल्याणं भाजनं यत्र जायते ।
पुरुषं तमजं नित्यं व्रजामि शरणं हरिम् ॥१३॥
सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः ।
देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥१४॥
विश्वेशं माधवं ढुण्ढिं दण्डपाणिं च भैरवम् ।
वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम् ॥१५॥
विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् ।
सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थसिद्धये ॥१६॥



## सरस्वत्यष्टकम्

रविरुद्रपितामहविष्णुनुतं हरिचन्दनकुङ्कुमपंकयुतं ।
मुनिवृन्दगणेंद्रसमानयुतं तव नौमि सरस्वति पादयुगम् ॥१॥
शशिशुद्धसुधाहिमधामयुतं शरदंबरबिंबसमानकरं ।
बहुरत्नमनोहरकान्तियुतं तव नौमि सरस्वति पादयुगम् ॥२॥
कनकाब्जविभूषितभूतिभवं भवभावविभाषितभिन्नपदं ।
प्रभुचित्तसमाहितसाधुपदं तव नौमि सरस्वति पादयुगम् ॥३॥

भवसागरमज्जनभीतिनुतं प्रतिपादितसंततिकारमिदं ।
विमलादिकशुद्धविशुद्धपदं तव नौमि सरस्वति पादयुगम् ।।४।।
मतिहीनजनाश्रयपादमिदं सकलागमभाषितभिन्नपदं ।
परिपूरितविश्वमनेकभवं तव नौमि सरस्वति पादयुगम् ।।५।।
परिपूर्णमनोरथधामनिधिं परमार्थविचारविवेकविधिं ।
सुरयोषितसेवितपादतलं तव नौमि सरस्वति पादयुगम् ।।६।।
सुरमौलिमणिद्युतिशुभ्रकरं विषयादिमहाभयवर्णहरं ।
निजकांतिविलेपितचन्द्रशिवं तव नौमि सरस्वति पादयुगम् ।।७।।
गुणनैककुलस्थितिभीतिपदं गुणगौरवगर्वितसत्यपदं ।
कमलोदरकोमलपादतलं तव नौमि सरस्वति पादयुगम् ।।८।।
त्रिसन्ध्यं यो जपेन्नित्यं जले वापि स्थले स्थितः ।
पाठमात्राद्भवेत्प्राज्ञो ब्रह्मनिष्ठः पुनः पुनः ।।९।।

•

## लिङ्गाष्टकम्

ब्रह्ममुरारिसुरार्चितलिङ्गं निर्मलभासितशोभितलिङ्गम् ।
जन्मजदुःखविनाशकलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।।१।।
देवमुनिप्रवरार्चितलिङ्गं कामदहं करुणाकरलिङ्गं ।
रावणदर्पविनाशकलिङ्गं तत्प्रणमामि सदाशिवलिङ्गं ।।२।।
सर्वसुगन्धिसुलेपितलिङ्गं बुद्धिविवर्धनकारणलिङ्गम् ।
सिद्धसुरासुरवन्दितलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।।३।।
कनकमहामणिभूषितलिङ्गं फणिपतिवेष्टितशोभितलिङ्गम् ।
दक्षसुयज्ञविनाशनलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।।४।।
कुङ्कुमचन्दनलेपितलिङ्गं पङ्कजहारसुशोभितलिङ्गम् ।
सञ्चितपापविनाशनलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।।५।।
भूतगणार्चितसेवितलिङ्गं भावैर्भक्तिभिरेव च लिङ्गम् ।
दिनकरकोटिप्रभाकरलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।।६।।
अष्टदलोपरिवेष्टितलिङ्गं सर्वसमुद्भवकारणलिङ्गम् ।
अष्टदरिद्रविनाशितलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।।७।।
सुरगुरुसुरवरपूजितलिङ्गं सुरवनपुष्पसदार्चितलिङ्गम् ।
परात्परं परमात्मकलिङ्गं तत्प्रणमामि सदाशिवलिङ्गम् ।।८।।

•

## आचमनम्

ॐ केशवाय नमः। ॐ नारायणाय नमः। ॐ माधवाय नमः (त्रिवार आचमन करने बाद) ॐ गोविन्दाय नमः। (दाहिना हाथ धोवें।)

ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा।
यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचि ॥

इस मन्त्र का उच्चारण करते हुए मार्जन करें।

## ध्यानम्

ध्याये नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसम्
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्।
पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानम्
विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥

## गणेशपूजनम्

विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय।
नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ॥

हरि ॐ गणानान्त्वा गणपति ँ हवामहे प्रियाणान्त्वा प्रियपति ँ हवामहे निधीनान्त्वा निधिपति ँ हवामहे वसो मम। आहमजानि गर्भधमात्त्वमजासि- गर्भधम् ॥ ॐ श्री गं गणपतये नमः। पादयोः पाद्यं हस्तयोरर्घ्यं मुखे आचमनीयं सर्वाङ्गे स्नानीयं जलं समर्पयामि।

## कार्तिकेयपूजनम्

ॐ षडाननं कुङ्कुमरक्तवर्णं महामतिं नित्यमयूरवाहनम्।
रुद्रस्य सूनुं शिवसैन्यनायकं स्कन्दं सदाहं शरणं प्रपद्ये ॥

षडाननाय कार्तिकेयाय नमः। पादयोः पाद्यं हस्तयोरर्घ्यं मुखे आचमनीयं सर्वाङ्गे स्नानीयं जलं समर्पयामि।

## पार्वतीपूजनम्

ॐ अम्बेऽअम्बिकेऽम्बालिके न मानयति कश्चन।
ससस्त्यकश्वः सुभद्रिकां काम्पीलवासिनीम् ॥

देवीपार्वत्यै नमः पादयोः पाद्यं हस्तयोरर्घ्यं मुखे आचमनीयं सर्वाङ्गे स्नानीयं जलं समर्पयामि।

## नन्दीश्वरपूजनम्

ॐ नन्दीश्वराय नमो नमः। पादयोः पाद्यं हस्तयोरर्घ्यं मुखे आचमनीयं सर्वाङ्गे स्नानीयं जलं समर्पयामि।

## शिवपूजनम्

ॐ श्री साम्बसदाशिवाय नमः। पादयोः पाद्यं हस्तयोरर्घ्यं मुखे आचमनीयं सर्वाङ्गे स्नानीयं जलं समर्पयामि।

## रुद्राभिषेकः

ॐ नमस्ते रुद्रमन्यव उतोत इषवे नमः। बाहुभ्यामुत ते नमः ॥१॥ याते रुद्रशिवातनूरघोरा पापकाशिनी। तया नस्तन्वाशन्तमया गिरिशन्ताभिचाकशीहि ॥२॥ यामिषुङ्गिरिशन्त हस्ते बिभर्ष्यस्तवे। शिवांगिरित्रतांकुरु माहि ँ्सीःपुरुषं जगत् ॥३॥ शिवेन वचसा त्वा गिरिशा च्छावदामसि। यथानः सर्वमिज्जगदयक्ष्म ँ्सुमनाऽ असत् ॥४॥ अध्यवोचदधिवक्ता प्रथमो दैव्योभिषक्। अहींश्च सर्वांजम्भयन्त्सर्वाश्च यातुधान्यो धराचीः परासुव ॥५॥ असौ यस्ताम्रोऽअरुण ऽ उत बभ्रुः सुमंगलः। येचैनं रुद्राऽअभितो दिक्षुश्रिताः सहस्रशो वैषा ँ हेडऽईमहे ॥६॥ असौ योवसर्पति नीलग्रीवो विलोहितः। उतैनंगोपाऽ अदृश्रन्नदृश्रन्नुदहार्यः सदृष्टो मृडयातिनः ॥७॥ नमोस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे। अथो येऽ अस्य सत्वानोहन्तेभ्यो करन्नमः ॥८॥ प्रमुञ्चधन्वनस्त्वमुभयोरात्क्न्योर्ज्याम्। याश्च ते हस्तऽ इषवः पराता भगवो वपः ॥९॥ विज्ज्यंधनुः कपर्दिनो विशल्यो बाणवाँऽऽउत। अनेशन्नस्य याऽ इषवऽआभुरस्य निषंगधिः ॥१०॥ याते हेतिर्मीढुष्टमहस्ते बभूवते धनुः। तयास्मान् विश्वतस्त्वमयक्ष्मया परिभुज ॥११॥ परितेधन्वनो हेतिरस्मान्वृणक्तुविश्वतः अथो यऽइषुधिस्त वारेऽअस्मन्निधेहितम् ॥१२॥ अवतत्य धनुष्ट्वं सहस्त्राक्षशतेषुधे। निशीर्यशल्यानां मुखाशिवोनः सुमनाभव ॥१३॥ नमस्तऽ आयुधायानातताय धृष्णवे। उभाभ्यामुतते नमो बाहुभ्यान्तवधन्वने ॥१४॥ मानो महान्तमुतमानोऽ अर्भकम्मानऽ उक्षन्तमुतमानऽ उक्षितम्। मानो व्वधीः पितरम्मोतमातरम्मानः प्रियास्तन्वो रुद्ररीरिषः ॥१५॥ मानस्तोके तनये मानऽ आयुषिमानो गोषुमानोऽ अश्वेषुरीरिषिः। मानो वीरान्रुद्रभामिनो वधीर्हविष्मन्तः सदमित्वाहवामहे ॥१६॥

ॐ नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥

ॐ त्र्यंबकं यजामहे सुगन्धि पुष्टिवर्धनम्।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥

ॐ यच्छन्दसामृषभो विश्वरूपः। छन्दोभ्योऽध्यमृतात्संबभूव ॥
स मेन्द्रो मेधया स्पृणोतु ॥ अमृतस्य देहधारणो भूयासं।

शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भुरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय ॥

ॐ यज्जाग्रतो दूरमुदैति दैवन्तदुसुप्तस्य तथैवैति ।
दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु ॥

शुद्धवालः सर्वशुद्धवालोमणिवालस्त आश्विनाः श्येतः श्येताक्षोरुणस्ते रुद्राय कर्णायामाऽ अवलिप्ता रौद्रानभोरूपाः पार्जन्याः ॥

ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ।
भवे भवेनातिभवे भवस्वमाम्भवोद्भवाय नमः ॥

वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रथमनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥

अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यः ।
सर्वेभ्यः सर्वशर्वेभ्यो नमस्तेऽस्तु रुद्ररूपेभ्यः ॥

तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥

ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् ।
ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥

ॐ शिवोनामासि स्वधितिस्ते पिता नमस्ते अस्तु मामाहि ँ सीः । निवर्तयाम्यायुषेन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥

॥ हरि ॐ ॥



## पुरुषसूक्तम्

ॐ सहस्त्रशीर्षा पुरुषः सहस्त्राक्षः सहस्रपात् ।
स भूमि ँ सर्वतस्पृत्त्वात्यतिष्ठद्दशाङ्गुलम् ॥१॥
पुरुष एवेद ँ सर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्त्वस्येशानो यदन्नेनातिरोहति ॥२॥
एतावानस्य महिमातो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥३॥
त्रिपादूर्ध्वऽ उदैत्पुरुषः पादोस्येहाभवत्पुनः ।
ततो विष्वङ् व्यक्रामत्साशनानशनेऽ अभि ॥४॥
ततो विराडजायत विराजो अधि पूरुषः ।
स जातोऽ अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥५॥

तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् ।
पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥६॥
तस्माद्यज्ञात्सर्वहुतऽ ऋचः सामानि जज्ञिरे ।
छन्दा ँ सि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥७॥
तस्मादश्वाऽ अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाताऽ अजावयः ॥८॥
तं यज्ञं बर्हिषि प्रोक्षन्पुरुषं जातमग्रतः ।
तेन देवाऽ अयजन्त साध्याऽ ऋषयश्चये ॥९॥
यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्यासीत्किम्बाहू किमूरू पादाऽ उच्येते ॥१०॥
ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।
ऊरु तदस्य यद्वैश्यः पद्भ्या ँ शूद्रोऽअजायत ॥११॥
चन्द्रमा मनसो जातश्चक्षोः सूर्योऽ अजायत ।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजत्यत ॥१२॥
नाभ्याऽ आसीदन्तरिक्षः ँ शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँऽअकल्पयन् ॥१३॥
यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यं ग्रीष्मऽ इध्मः शरद्धविः ॥१४॥
सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञन्तन्वानाऽ अबध्नन्पुरुषं पशुम् ॥१५॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥१६॥

•

अद्भ्यः संभृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताग्रे ।
तस्य त्वष्टा विदधद्रुमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥१७॥
वेदाहमेतं पुरुषं महान्तमादित्यवर्णन्तमसः परस्तात् ।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥१८॥
प्रजापतिश्चरति गर्भेऽ अन्तरजायमानो बहुधा विजायते ।
तस्य योनिं परिपश्यन्ति धीरास्तस्मिन् ह तस्थूर्भुवनानि विश्वा ॥१९॥
यो देवेभ्यऽ आतपति यो देवानां पुरोहितः ।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥२०॥

रुचं ब्राह्मं जनयंतो देवाऽ अग्रे तदब्रुवन् ।
यस्त्वैवं ब्राह्मणो विद्यत्तस्य देवाऽ असन्वशे ॥२१॥
श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।
इष्णन्निषाणामुम्मऽ इषाण सर्वलोकम्मऽ इषाण ॥२२॥

•

## शिवमानसपूजास्तोत्रम्

रत्नैः कल्पितमासनं हिमजलैः स्नानं च दिव्याम्बरं
नानारत्नविभूषितं मृगमदामोदाङ्कितं चन्दनम् ।
जातीचम्पकबिल्वपत्ररचितं पुष्पं च धूपं तथा
दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यताम् ॥१॥
सौवर्णे नवरत्नखण्डरचिते पात्रे घृतं पायसं
भक्ष्यं पञ्चविधं पयोदधियुतं रम्भाफलं पानकम् ।
शाकानामयुतं जलं रुचिकरं कर्पूरखण्डोज्ज्वलं
ताम्बूलं मनसा मया विरचितं भक्त्या प्रभो स्वीकुरु ॥२॥
छत्रं चामरयोर्युगं व्यजनकं चादर्शकं निर्मलं
वीणाभेरिमृदङ्गकाहलकला गीतं च नृत्यं तथा ।
साष्टांगं प्रणतिः स्तुतिर्बहुविधा ह्येतत्समस्तं मया
सङ्कल्पेन समर्पितं तव विभो पूजां गृहाण प्रभो ॥३॥
आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः ।
सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो
यद्यत्कर्म करोमि तत्तदखिलं शम्भो तवाराधनम् ॥४॥
करचरणकृतं वाक्कायजं कर्मजं वा
श्रवणनयनजं वा मानसं वापराधम् ।
विहितमविहितं वा सर्वमेतत्क्षमस्व
जय जय करुणाब्धे श्री महादेव शम्भो ॥५॥

•

चन्द्रोद्भासितशेखरे स्मरहरे गङ्गाधरे शंकरे
सर्पैर्भूषितकण्ठकर्णविवरे नेत्रोत्थवैश्वानरे ।

दन्तित्वक्कृतसुन्दराम्बरधरे त्रैलोक्यसारे हरे
मोक्षार्थं कुरु चित्तवृत्तिमचलामन्यैस्तु किं कर्मभिः ॥
किं मानेन धनेन वाजिकरिभिः प्राप्तेन राज्येन किं
किं वा पुत्रकलत्रमित्रपशुभिर्देहेन गेहेन किम् ।
ज्ञात्वा तत्क्षणभङ्गुरं सपदि रे त्याज्यं मनो दूरतः
स्वात्मानं गुरुवाक्यतो भज भज श्रीपार्वतीवल्लभम् ॥
आयुर्नश्यति पश्यतां प्रतिदिन याति क्षणं यौवनम्
प्रत्यायान्ति गता पुनर्न दिवसा कालो जगद्भक्षकः ।
लक्ष्मीतोयतरङ्गभङ्गचपलं विद्युच्चलं जीवितं
तस्मान्मे शरणागतः शरणद त्वं रक्ष रक्षाधुना ॥

•

हरि ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥

## पशुपत्यष्टकम्

पशुपतींदुपतिं धरणीपतिं भुजगलोकपतिं च सतीपतिम् ।
प्रणतभक्तजनार्तिहरं परं भजत रे मनुजा गिरिजापतिम् ॥१॥
न जनको जननी न च सोदरो न तनयो न च भूरिबलं कुलम् ।
अवति कोऽपि न कालवशं शतं भजत रे मनुजा० ॥२॥
मुरजडिंडिमवाद्यविलक्षणं मधुरपंचमनादविशारदम् ।
प्रथमभूतगणैरपि सेवितं भजत रे मनुजा० ॥३॥
शरणदं सुखदं शरणान्वितं शिव शिवेति शिवेति नतं नृणाम् ।
अभयदं करुणावरुणालयं भजत रे मनुजा० ॥४॥
नरशिरोरचितं मणिकुण्डलं भुजगहारमुदं वृषभध्वजम् ।
चितिरजोधवलीकृतविग्रहं भजत रे मनुजा० ॥५॥
मखविनाशकरं शशिशेखरं सततमध्वरभाजिफलप्रदम् ।
प्रलयदग्धसुरासुरमानवं भजत रे मनुजा० ॥६॥
मदपास्य चिरं हृदि संस्थितं मरणजन्मजरामयपीडितम् ।
जगदुदीक्ष्य समीपभयाकुलं भजत रे मनुजा० ॥७॥
हरिविरिंचिसुराधिपपूजितं यमजनेशधनेशनमस्कृतम् ।
त्रिनयनं भुवनत्रितयाधिपं भजत रे मनुजा० ॥८॥
पशुपतेरिदमष्टकमद्भुतं विरचितं पृथिवीपतिसूरिणा ।
पठति संश्रृणुते मनुजः सदा शिवपुरीं वसते लभते मुदम् ॥९॥
इति श्रीपशुपत्यष्टकं सम्पूर्णम् ॥

•

ॐ त्र्यंबकं यजामहे सुगन्धिं पुष्टिवर्धनम्।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥
सुगन्धिद्रव्यं समर्पयामि। श्री साम्बसदाशिवाय नमः।
ॐ गं गणपतये नमः। श्री षडाननाय कार्तिकेयाय नमः। देवीपार्वत्यै नमः। नन्दीश्वराय नमो नमः।

ॐ आपोहिष्ठा मयोभुवस्तान ऊर्जे दधातन।
महेरणाय चक्षसे॥ यो वः शिवतमोरसस्तस्य भाजयते हनः।
उशतीरिवमातरः॥ तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ।
आपो जन यथाचनः॥

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥
श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम्।
विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम्॥
त्वां गन्धर्वा अखनंस्त्वामिन्द्रस्त्वाम्वृहस्पतिः।
त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत॥

चन्दनं समर्पयामि। श्री साम्बसदाशिवाय नमः। ॐ गं गणपतये नमः। षडाननाय कार्तिकेयाय नमः। देवीपार्वत्यै नमः। नन्दीश्वराय नमो नमः॥

सौराष्ट्रे सोमनाथं च श्रीशैले मल्लिकार्जुनम्।
उज्जयिन्यां महाकालमोंकारममलेश्वरम्॥१॥
परल्यां वैजनाथं च डाकिन्यां भीमशङ्करम्।
सेतुबन्धे तु रामेशं नागेशं दारुकावने॥२॥
वाराणस्यां तु विश्वेशं त्र्यम्बकं गौतमीतटे।
हिमालये तु केदारं घुसृणेशं शिवालये॥३॥
एतानि ज्योतिर्लिङ्गानि सायंप्रातः पठेन्नरः।
सप्तजन्मकृतं पापं स्मरणेन विनश्यति॥४॥

•

(तत्पश्चात् शिवाष्टोत्तरशतनामस्तोत्र का पाठ करते हुए बिल्वपत्र चढ़ावें।)

## शिवाष्टोत्तरशतनामस्तोत्रम्

शिवो महेश्वरः शम्भुः पिनाकी शशिशेखरः।
वामदेवो विरूपाक्षः कपर्दी नीललोहितः॥१॥

शंकरः शूलपाणिश्च खट्वांगी विष्णुवल्लभः।
शिपिविष्टोऽम्बिकानाथः श्रीकण्ठो भक्तवत्सलः ॥२॥
भवः शर्वस्त्रिलोकेशः शितिकण्ठः शिवाप्रियः।
उग्रः कपाली कामारिरन्धकासुरसूदन ॥३॥
गंगाधरो ललाटाक्षः कालकालः कृपानिधिः।
भीमः परशुहस्तश्च मृगपाणिर्जटाधरः ॥४॥
कैलासवासी कवची कठोरस्त्रिपुरान्तकः।
वृषाङ्को वृषभारूढो भस्मोद्धूलितविग्रहः ॥५॥
सामप्रियः स्वरमयस्त्रयीमूर्तिरनीश्वरः।
सर्वज्ञः परमात्मा च सोमसूर्याग्निलोचनः ॥६॥
हविर्यज्ञमयः सोमः पञ्चवक्त्रः सदाशिवः।
विश्वेश्वरो वीरभद्रो गणनाथः प्रजापतिः ॥७॥
हिरण्यरेता दुर्धर्षो गिरीशो गिरिशोऽनघः।
भुजंगभूषणो भर्गो गिरिधन्वा गिरिप्रियः ॥८॥
कृत्तिवासाः पुरारातिर्भगवान् प्रमथाधिपः।
मृत्युञ्जयः सूक्ष्मतनुर्जगद्व्यापी जगद्गुरुः ॥९॥
व्योमकेशो महासेनजनकश्चारुविक्रम।
रुद्रो भूतपतिः स्थाणुरहिर्बुध्न्यो दिगम्बरः ॥१०॥
अष्टमूर्तिरनेकात्मा सात्त्विकः शुद्धविग्रहः।
शाश्वतः खण्डपरशूरजःपाशविमोचनः ॥११॥
मृडः पशुपतिर्देवो महादेवोऽव्ययो हरिः।
पूषदन्तभिदव्यग्रो दक्षाध्वरहरो हरः ॥१२॥
भगनेत्रभिदव्यक्तः सहस्राक्षः सहस्रपात्।
अपवर्गप्रदोऽनन्तस्तारकः परमेश्वरः ॥१३॥



ॐ अक्षन्नमीदन्तह्यव प्रियाऽअधूषत। अस्तोषत स्वभावनो विप्रानविष्ठयामती योजान्विन्द्रते हरी ॥

अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभनाः।
मया निवेदिता भक्त्या गृहाण परमेश्वर ॥
अक्षतान् समर्पयामि।

ॐ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् ।
यद्देवेषु त्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम् ॥
विभूतिं समर्पयामि । श्री साम्बसदाशिवाय नमः ।
ॐ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्यासीत् किं बाहू किमूरूपादा उच्येते ॥
पुष्पाणि समर्पयामि। श्री साम्बसदाशिवाय नमः। ॐ गं गणपतये नमः। षडाननाय कार्तिकेयाय नमः। देवीपार्वत्यै ममः। नन्दीश्वराय नमो नमः।



## श्रीशिवपञ्चाक्षरस्तोत्रम्

नागेन्द्रहाराय त्रिलोचनाय भस्माङ्गराय महेश्वराय ।
नित्याय शुद्धाय दिगम्बराय तस्मै 'न'काराय नमः शिवाय ॥१॥
मन्दाकिनीसलिलचन्दनचर्चिताय नन्दीश्वरप्रमथनाथमहेश्वराय ।
मन्दारपुष्पबहुपुष्पसुपूजिताय तस्मै 'म'कराय नमः शिवाय ॥२॥
शिवाय गौरीवदनाब्जवृन्दसूर्याय दक्षाध्वरनाशकाय ।
श्रीनीलकण्ठाय वृषध्वजाय तस्मै 'शि'काराय नमः शिवाय ॥३॥
वसिष्ठकुम्भोद्भवगौतमार्यमुनीन्द्रदेवार्चितशेखराय ।
चन्द्रार्कवैश्वानरलोचनाय तस्मै 'व'काराय नमः शिवाय ॥४॥
यक्षस्वरूपाय जटाधराय पिनाकहस्ताय सनातनाय ।
दिव्याय देवाय दिगम्बराय तस्मै 'य' कराय नमः शिवाय ॥५॥
पञ्चाक्षरमिदं पुण्यं यः पठेच्छिवसन्निधौ ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥६॥



ॐ नमो बिल्मिने च कवचिने च नमो वर्मिणे च वरूथिने च नमः ।
श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्याय चाहनन्याय च ॥
श्री साम्बसदाशिवाय नमः। ॐ गं गणपतये नमः।
षडाननाय कार्तिकेयाय नमः। देवीपार्वत्यै नमः। नन्दीश्वराय नमो नमः।
बिल्वपत्रपुष्पाणि समर्पयामि ।
ॐ अघोराय नमः। ॐ पशुपतये नमः। ॐ शिवाय नमः। ॐ विरूपाय नमः। ॐविश्वरूपाय नमः। ॐ भैरवाय नमः। ॐ त्र्यंबकाय नमः। ॐशूलपाणिने नमः। ॐ कपर्दिने नमः। ॐ ईशानाय नमः। ॐ महेशाय नमः॥

ॐ भगवत्यै नमः। ॐ उमादेव्यै नमः। ॐ शंकरप्रियायै नमः। ॐ पार्वत्यै नमः। ॐ गौर्यै नमः। ॐ कालिन्द्यै नमः। ॐ कोटिदेव्यै नमः। ॐविश्वधारिण्यै नमः। ॐ विश्वेश्वर्यै नमः। ॐ विश्वमात्रै नमः। ॐ शिवायै नमः।

## बिल्वाष्टकम्

त्रिदलं त्रिगुणाकारं त्रिनेत्रं च त्रिधायुतम्।
त्रिजन्मपापसंहारमेकबिल्वं शिवार्पणम् ॥१॥
त्रिशाखैर्बिल्वपत्रैश्च अच्छिद्रैः कौमलैस्तथा।
शिवपूजां करिष्यामि एकबिल्वं शिवार्पणम् ॥२॥
अखण्डबिल्वपत्रेण पूजितं नन्दिकेश्वरम्।
शुध्यते सर्वपापेभ्य एकबिल्वं शिवार्पणम् ॥३॥
शालिग्रामशिलामेकां विप्राणां जातु अर्पयेत्।
सोमयज्ञमहादानमेकबिल्वं शिवार्पणम् ॥४॥
दन्तिकोटिसहस्राणि अश्वमेधशतानि च।
कोटिकन्यामहादानमेकबिल्वं शिवार्पणम् ॥५॥
लक्ष्म्याश्च स्तन उत्पन्नं महादेव सदाप्रियम्।
बिल्ववृक्षं प्रयच्छामि एकबिल्वं शिवार्पणम् ॥६॥
दर्शनं बिल्ववृक्षस्य स्पर्शनं पापनाशनम्।
अघोरपापसंहारमेकबिल्वं शिवार्पणम् ॥७॥
मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे।
अग्रतः शिवरूपाय एकबिल्वं शिवार्पणम् ॥८॥
बिल्वाष्टकमिदं पुण्यं यः पठेच्छिवसन्निधौ।
सर्वपापविनिर्मुक्तः शिवलोकमवाप्नुयात् ॥९॥

•

माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो।
मयानीतानि पुष्पाणि गृहाण परमेश्वर ॥

पुष्पमालां समर्पयामि। ( पुष्पमालान्ते दूर्वाङ्कुराणि। )

ॐ काण्डात्काण्डात्प्ररोहन्ति परुषः परुषस्परि।
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥

ॐ श्रीमन्गणाधिपाय नमः। ॐ उमापुत्राय नमः। ॐ अघनाशनाय नमः। ॐ विनायकाय नमः। ॐ ईशपुत्राय नमः। ॐ सर्वसिद्धिप्रदाय नमः।

ॐ एकदन्ताय नमः। ॐ नीलवक्त्राय नमः। ॐ मूषकवाहनाय नमः।
ॐ कुमारगुरवे नमः। ॐ ऋद्धिसिद्धिसहिताय श्री गजाननाय दूर्वाङ्कुराणि समर्पयामि।

( दूर्वान्ते तुलसीदलानि। )

ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्यपा ँ सुरे स्वाहा॥

तुलसीदलं समर्पयामि।

ॐ याते हेतिर्मीढुष्टमहस्ते बभूवते धनुः। तयास्मान् विश्वतस्त्वमयक्ष्मया परिभुज॥

ॐ धूरसि धूर्व धूर्वन्तं धूर्वतं योऽस्मात् धूर्वति तं धूर्वयं वयं धूर्वामः।
देवानामसि वह्नितम ँ सस्नितमं पप्रितमं जुष्टतमं देव हूतमम्॥

वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्॥

( प्रत्यक्षदीपं )

ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत॥

प्रत्यक्षदीपं दर्शयामि। (हस्तप्रक्षालनम् कुर्यात्। नैवैद्यं पुरतः स्थाप्य, तुलसीदलेन बिल्वपत्रेण पुष्पेण अ.च्छाद्य, गायत्रीमन्त्रेण संप्रोक्ष्य )

ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्।

( आचमनीयं )

ॐ प्राणाय स्वाहा। ॐ अपानाय स्वाहा। ॐ व्यानाय स्वाहा।
ॐ उदानाय स्वाहा। ॐ समानाय स्वाहा।

ॐ पञ्चप्राणेभ्यः स्वाहा। ( धेनुमुद्रां प्रदर्श्य )

ॐ नाभ्या आसीदन्तरिक्ष ँ शीर्ष्णो द्यौः समवर्तन।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँऽ अकल्पयन्॥

(धेनुमुद्रयाऽमृतीकृत्य ग्रासमुद्रां प्रदर्श्य तालीत्रयं कुर्यात्। पुनराचमनीयम्।)

ॐ त्र्यंबकं यजामहे सुगन्धिं पुष्टिवर्धनम्।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥

नैवेद्यान्ते आचमनीयं, हस्तप्रक्षालनं जलं समर्पयामि। शिवाय नमः। मुखप्रक्षालनं जलं समर्पयामि। शिवाय नमः। पादप्रक्षालनं समर्पयामि। शिवाय नमः।

( करोद्वर्तनम्। )

ॐ अ ँ्शुनाते ॐ अ ँ् शुः पृच्यतां परुषा परुः ।
गन्धस्ते सोममवतु मदाय रसोऽअच्युतः ॥
करोद्वर्तनार्थे चन्दनं समर्पयामि ।

( ऋतुफलं )

ॐ या ऽ फलिनीर्या ऽ अफला ऽ अपुष्पायाश्चपुष्पिणीः ।
वृहस्पतिप्रसूतास्तानो मुञ्चन्त्व ँ्हसः ॥
इदं फलं मया देव स्थापितं पुरतस्तव ।
तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥

( हिरण्यदक्षिणां )

ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ।
सदाधार पृथिवीं द्यामुते माम् कस्मै देवाय हविषा विधेम ॥
हिरण्यदक्षिणां समर्पयामि ।

( आरर्तिक्यं )

ॐ इद ँ्हविः प्रजननम्मेऽअस्तु दशवीर ँ् सर्वगम ँ् स्वस्तये ।
आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि । अग्निः प्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतोऽअस्मासु धत्र ।

ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ।
अग्निर्वर्च्यो ज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिवर्चः स्वाहा ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ।

कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् ।
सदा वसन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ॥

असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे सुरतरुवरशाखा लेखनीं पत्रमुर्वी ।
लिखति यदि गृहीत्वा शारदा सर्वकालं तदपि तवगुणानामीश पारं न याति ॥

त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव ॥

ॐ द्यौः शान्तिरन्तरिक्ष ँ्शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्व ँ्शान्तिः शान्तिरेव शान्तिः सामा शान्तिरेधि ॥

यतो यतः समीहसे ततो नोऽअभयं कुरु । शं नः कुरु प्रजाभ्यो भयन्नः पशुभ्यः ॥
सुशान्तिर्भवतु ॥

( मन्त्रपुष्पाञ्जलिः )

ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ॥
हरिः ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ।
ॐ राजाधिराजाय प्रसह्यसाहिने नमो वयं वैश्रवणाय कुर्महे ॥
स मे कामान् कामकामाय मह्यम् कामेश्वरो वैश्रवणो ददातु ।
कुबेराय वैश्रवणाय महाराजाय नमः ॥

ॐ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरत विश्वतस्पात् ।
सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एकः ॥

नानासुगन्धिपुष्पाणि यथाकालोद्भवानि च ।
पुष्पाञ्जलिर्मया दत्तं गृहाण परमेश्वर ॥

सेवान्तिकाबकुलचम्पकपाटलाब्जैः पुन्नागजातिकरवीररसालपुष्पैः ।
दिव्यप्रवालतुलसीदलमंजरीभिः त्वां पूजयामि जगदीश्वर विश्वनाथ ॥

शिवाय नमः ।

## शिवताण्डवस्तोत्रम्

जटाकटाहसंभ्रमभ्रमन्निलिम्पनिर्झरी-
विलोलवीचिवल्लरीविराजमानमूर्धनि ।
धगद्धगद्धगज्ज्वलल्ललाटपट्टपावके
किशोरचन्द्रशेखरे रतिः प्रतिक्षणं मम ॥१॥

धराधरेन्द्रनन्दिनीविलासबंधुबन्धुर-
स्फुरद्दिगन्तसन्ततिप्रमोदमानमानसे ।
कृपाकटाक्षधोरणीनिरुद्धदुर्धरापदि
क्वचिच्चिदम्बरे मनोविनोदमेतु वस्तुनि ॥२॥

जटाभुजङ्गपिङ्गलस्फुरत्फणामणिप्रभा-
कदम्बकुङ्कुमद्रवप्रलिप्तदिग्वधूमुखे ।
मदांधसिंधुरस्फुरत्त्वगुत्तरीयमेदुरे
मनोविनोदमद्भुतं बिभर्तुभूतभर्त्तरि ॥३॥

सहस्रलोचनप्रभृत्यशेषलेखशेखर-
प्रसूनधूलिधोरणीविधूसरांघ्रिपीठभूः ।

भुजङ्गराजमालया निबद्धजाटजूटकः
श्रियै चिराय जायतां चकोरबन्धुशेखरः ॥४॥

ललाटचत्वरज्वलद्धनञ्जयस्फुलिङ्गभा
निपीतपञ्चसायकं नमन्निलिम्पनायकम् ।
सुधामयूखलेखयाविराजमानशेखरं
महाकपालिसम्पदे शिरो जटालमस्तु नः ॥५॥

करालभालपट्टिकाधगद्धगद्धगज्ज्वल-
द्धनञ्जयाधरीकृतप्रचण्डपञ्चसायके ।
धराधरेन्द्रनन्दिनीकुचाग्रचित्रपत्रक-
प्रकल्पनैकशिल्पिनि त्रिलोचने मतिर्मम ॥६॥

नवीनमेघमण्डलीनिरुद्धदुर्धरस्फुरत्-
कुहूनिशीथिनीतमः प्रबन्धबन्धुकन्धरः ।
निलिम्पनिर्झरीधरस्तनोतु कृत्तिसुन्दरः
कलानिधानबन्धुरः श्रियं जगद्धुरंधरः ॥७॥

प्रफुल्लनीलपङ्कजप्रपञ्चकालिमच्छटा-
विडम्बिकण्ठकन्धरारुचिप्रबन्धकन्धरम् ।
स्मरच्छिदं पुरच्छिदं भवच्छिदं मखच्छिदं
गजच्छिदान्धकच्छिदं तमन्तकच्छिदं भजे ॥८॥

अखर्वसर्वमङ्गलाकलाकदम्बमञ्जरी-
रसप्रवाहमाधुरीविजृम्भणामधुव्रतम् ।
स्मरान्तकं पुरान्तकं भवान्तकं मखान्तकं
गजान्तकांधकान्तकं तमंतकान्तकं भजे ॥९॥

जयत्वदभ्रविभ्रमभ्रमद्भुजङ्गमस्फुर-
द्धगद्धगद्विनिर्गमत् करालभालहव्यवाट् ।
धिमिन्धिमिन्धिमिन्ध्वनन्मृदङ्गतुङ्गमङ्गल-
ध्वनिक्रमप्रवर्तितप्रचण्डताण्डवः शिवः ॥१०॥

दृषद्विचित्रतल्पयोर्भुजङ्गमौक्तिकस्रजो-
र्गरिष्ठरत्नलोष्ठयोः सुहृद्विपक्षपक्षयोः ।
तृणारविन्दचक्षुषोः प्रजामहीमहेन्द्रयोः
समं प्रवृत्तयन् मनः कदा सदाशिवं भजे ॥११॥

कदा निलिम्पनिर्झरीनिकुञ्जकोटरे वसन्
विमुक्तदुर्मतिः सदा शिरस्थमञ्जलिं वहन् ।
विमुक्तलोललोचनो ललामभाललग्नकः
शिवेति मंत्रमुच्चरन् कदा सुखी भवाम्यहम् ॥१२॥

इमं हि नित्यमेव मुक्तमुत्तमोत्तमं स्तवं
पठन् स्मरन् ब्रुवन् नरो विशुद्धिमेति सन्ततम् ।
हरे गुरौ सुभक्तिमाशु याति नान्यथा गतिं
विमोहनं हि देहिनां तु शंकरस्य चिन्तनम् ॥१३॥

पूजावसानसमये दशवक्त्रगीतं यः शम्भुपूजनपरं पठति प्रदोषे ।
तस्य स्थिरां रथगजेन्द्रतुरङ्गयुक्तां लक्ष्मीं सदैव सुमुखीं प्रददाति शम्भुः ॥

•

निधये सर्वविद्यानां भिषगे भवरोगिणाम् ।
गुरवे सर्वलोकानां दक्षिणामूर्तये नमः ॥

•

## आरती–१

### हरिः ॐ

नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः॥

ॐ जय गङ्गाधर हर शिव जय गिरिजाधीश
शिव जय गौरीनाथ, त्वं मां पालय नित्यं,
त्वं मां पालय शम्भो, कृपया जगदीश।
ॐ हर हर हर महादेव ॥१॥

कैलासे गिरिशिखरे कल्पद्रुमविपिने, शिव कल्प०
गुञ्जति मधुकरपुञ्जे २ कुञ्जवने गहने।
कोकिल कूजति खेलति हंसावलि ललिता; शिव हंसा०
रचयति कलाकलापं २ नृत्यति मुदसहिता॥
ॐ हर हर हर महादेव ॥२॥

तस्मिँल्ललितसुदेशे शालामणिरचिता, शिव शाला०
तन्मध्ये हरनिकटे २ गौरी मुदसहिता।
क्रीडां रचयति भूषां रञ्जितनिजमीशं, शिव रञ्जित०
इन्द्रादिकसुरसेवित २ प्रणमति ते शीर्षम्॥
ॐ हर हर हर महादेव ॥३॥

विबुधवधूर्बहु नृत्यति हृदये मुदसहिता, शिव हृदये०
किन्नर गायन कुरुते २ सप्तस्वरसहिता।
धिनकत थै थै धिनकत मृदङ्ग वादयते, शिव मृदङ्ग०
क्वण क्वण ललिता वेणु २ मधुरं नादयते॥
ॐ हर हर हर महादेव ॥४॥

रुण रुण चरणे रचयति नूपुरमुज्वलितं, शिव नूपुर०
चक्रावर्त्ते भ्रमयति २ कुरुते तांधिकतां।
तां तां लुप चुप तालं नादयते, शिव ताल०
अंगुष्ठांगुलिनादं २ लास्यकतां कुरुते॥
ॐ हर हर हर महादेव ॥५॥

कर्पूरद्युतिगौरं पञ्चाननसहितं, शिव पञ्चा०
त्रिनयनशशिधरमौलि २ विषधरकंठयुतं ।
सुन्दरजटाकलापं पावकयुतभालं, शिव पावक शशि०
डमरुत्रिशूलपिनाकं २ करधृतनृकपालम् ॥
ॐ हर हर हर महादेव ॥६॥

शंखनिनादं कृत्वा झल्लरि नादयते, शिव झल्लरि०
नीराजयते ब्रह्मा २ वेदऋचां पठते ।
इति मृदुचरणसरोजं हृदि कमले धृत्वा, शिव हृदि०
अवलोकयति महेशं २ ईशं ह्यभिनत्वा ॥
ॐ हर हर हर महादेव ॥७॥

रुण्डै रचयति मालां पन्नगमुपवीतं, शिव पन्नग०
वामविभागे गिरिजा २ रूपं अति ललितं ।
सुन्दरसकलशरीरे कृतभस्माभरणं, शिव कृत०
इति वृषभध्वजरूपं २ तापत्रयहरणं ॥
ॐ हर हर हर महादेव ॥८॥

ध्यानं आरति समये इतिकृत्वा, शिव हृदये इति०
रामं त्रिजटानाथं शंभो त्रिजटानाथं ईशं ह्यभिनत्वा ।
संगीतमेवं प्रतिदिन पठनं यः कुरुते, शिव पठनं०
शिवसायुज्यं गच्छति २ भक्त्या यः शृणुते ॥
ॐ हर हर हर महादेव ॥९॥

जय गङ्गाधर हर शिव जय गिरिजाधीश
शिव जय गौरीनाथ, त्वं मां पालय नित्यं
त्वं मां पालय शम्भो, कृपया जगदीश ॥
ॐ हर हर हर महादेव ॥

## आरती–२

शीशगङ्ग अर्द्धाङ्गपार्वती, सदा विराजत कैलासी।
नन्दी भृंगी नृत्य करत हैं, गुण भक्तन शिव के गासी॥
शीतल मन्द सुगन्ध पवन बहे, जहाँ बैठे शिव अविनाशी।
करत गान गन्धर्व सप्तसुर, राग रागिनी अति गासी॥
यक्ष रक्ष भैरव जहाँ डोलत, बोलत हैं बन के बासी।
कोयल शब्द सुनावत सुन्दर, भँवर करत हैं गुन्जासी॥
कल्पद्रुम अरु पारिजात तरु, लाग रहे हैं लक्षासी।
कामधेनु कोटिक जहाँ डोलत, करत फिरत हैं भिक्षासी॥
सूर्यकान्त सम पर्वत सोहे, चन्द्रकान्त भव के बासी।
छहों तो ऋतु नित फलत रहत हैं, पुष्प चढ़त हैं वर्षासी॥
देव मुनि जन की भीड़ पड़त हैं, निगम रहत जो नित गासी।
ब्रह्मा विष्णु हर को ध्यान धरत हैं, कछु शिव हमको फरमासी॥
ऋद्धि-सिद्धि के दाता शंकर, सदा आनन्दित सुख रासी।
जिनको सुमिरन सेवा करता, छूट जाय यम को फाँसी॥
त्रिशूलधरजी को ध्यान निरन्तर, मन लगायकर जो गासी।
दूर करो विपदा शिव तन की, जन्म-जन्म शिव पद पासी॥
कैलासी काशी के वासी बाबा, अविनाशी मेरी सुख लीजो।
सेवक जान सदा चरणन को, अपनो जान कृपा कीजो॥
आप तो प्रभुजी सदा सयाने बाबा, अवगुण मेरो सब ढँकियो।
सब अपराध क्षमा कर शंकर, किंकर की विनती सुनियो॥
अभयदान दीजो प्रभु मौको, सकल सृष्टि के हितकारी।
श्री भोलेनाथ बाबा भक्त निरंजन, भव भंजन भव शुभकारी॥
काल हरो हर कष्ट हरो हर, दुःख हरो दारिद्रय हरो।
नमामि शंकर भवानी भोले बाबा, हर-हर शंकर आप शरणम्!॥

•

## ❀ शिवमहिम्नःस्तोत्रम् ❀

हरिः ॐ

**गजाननं भूतगणाधिसेवितं कपित्थजम्बूफलचारुभक्षणम् ।**
**उमासुतं शोकविनाशकारकं नमामि विघ्नेश्वरपादपङ्कजम् ।।**

**कपित्थजम्बूफलचारुभक्षणम्** = कैथ और जामुन के सुन्दर फलों को खाने वाले, **गजाननम्** = हाथी के मुख वाले, **भूतगणाधिसेवितम्** = भूतगणों से पूजित, **उमासुतम्** = पार्वती के पुत्र ( गणेशजी ) को **नमामि** = मैं नमस्कार करता हूँ। **शोकविनाशकारकम्** = संसार रूपी शोक को नष्ट करने वाले **विघ्नेश्वरपादपङ्कजम्** = गणेश जी के चरणकमलों को **नमामि** = मैं नमस्कार करता हूँ।

**महिम्नः पारं ते परमविदुषो यद्यसदृशी**
**स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः ।**
**अथावाच्यः सर्वः स्वमतिपरिणामावधि गृणन्**
**ममाप्येष स्तोत्रे हर ! निरपवादः परिकरः ।।१।।**

( पदच्छेदः )

महिम्नः पारं ते परं अविदुषः यदि असदृशी
स्तुतिः ब्रह्मादीनाम् अपि तद् अवसन्नाः त्वयि गिरः ।
अथ अवाच्यः सर्वः स्वमतिपरिणामावधि गृणन्
मम अपि एषः स्तोत्रे हर ! निरपवादः परिकरः ।।

( सान्वयार्थः )

**हर !** = हे पापों को हरने वाले ! **ते** = आपकी, **महिम्नः** = महिमा की, **परम्** = अन्तिम **पारम्** = सीमा को **अविदुषः** = नहीं जानने वाले का **स्तुतिः** = स्तवन **यदि** = अगर **तादृशी** = जैसा होना चाहिये वैसा नहीं है, **तद्** = तो **ब्रह्मादीनाम्** = ब्रह्मा, विष्णु, इंद्रादिक का, **अपि** = भी **गिरः** = स्तवन **त्वयि** = आपके **अवसन्नाः** = अयोग्य ही है। ( क्योंकि वे भी आप को पूर्ण रूपसे नहीं जानते ) **अथ** = यदि ( ऐसा कहो कि ) **सर्वः** = सभी लोग **स्वमतिपरिणामावधि** = अपनी बुद्धि की पहुँच तक **गृणन्** = स्तवन करने पर **अवाच्यः** = दोष

देने योग्य नहीं है **मम अपि** = ( तब तो ) मेरा भी **स्तोत्रे** = स्तवन करने का **एषः** = यह **परिकरः** = प्रयत्न **निरपवादः** = दोषरहित ही है।

**अतीतः पन्थानं तव च महिमा वाङ्मनसयो-**
**रतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि।**
**सः कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः**
**पदे त्वर्वाचीने पतति न मनः कस्य न वचः ॥२॥**

( पदच्छेदः )

अतीतः पन्थानम् तव च महिमा वाङ्मनसयोः
अतद्व्यावृत्त्या यं चकितम् अभिधत्ते श्रुतिः अपि।
सः कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः
पदे तु अर्वाचीने पतति न मनः कस्य न वचः॥

( सान्वयार्थः )

**तव** = आपकी **महिमा** = बड़ाई **वाङ्मनसयोः** = वाणी और मन की **पन्थानम्** = पहुँच से **अतीतः** = दूर है **च** = ही ( क्योंकि ) **यं** = जिसका (वर्णन) **श्रुतिः** = वेद **अपि** = भी **चकितम्** = डरकर **अतद्व्यावृत्त्या** = निषेध मुख से **अभिधत्ते** = करता है, **सः** = वह **कस्य** = किसकी **स्तोतव्यः** = स्तुति का विषय हो सकता है (क्योंकि) **कतिविधगुणः** = ( उसके सगुण रूप में कौन से गुण नहीं हैं ? (अर्थात् अनन्त गुण हैं) **कस्य** = (उसका निर्गुण रूप) किसी का (किस वाणी या मन का ) **विषयः** = विषय हो सकता है ? (फिर भी) **अर्वाचीने** = भक्तों पर कृपा करके धारण किये हुए **पदे** = पंचमुखादि रूपों में **तु** = तो **कस्य** = किस प्राणी का **मनः** = मन **न पतति** = नहीं लगता है ? **वचः** = ( और ) वाणी **न** = नहीं **(पतति)** = (प्रवेश करती ?)।

[ वेद भी गलती न हो जाय इस भय से सगुण रूप का वर्णन तो "सर्वं खल्विदं ब्रह्म"—सभी कुछ ब्रह्म है—इस प्रकार और निर्गुण रूप का वर्णन "नेति नेति"—वह यह सब नहीं हैं—इस प्रकार करता है। ]

**मधुस्फीता वाचः परमममृतं निर्मितवत-**
**स्तव ब्रह्मन् ! किं वागपि सुरगुरोर्विस्मयपदम्।**
**मम त्वेतां वाणीं गुणकथनपुण्येन भवतः**
**पुनामीत्यर्थेऽस्मिन् पुरमथन बुद्धिर्व्यवसिता ॥३॥**

( पदच्छेदः )

मधुस्फीता वाचः परमम् अमृतम् निर्मितवतः
तव ब्रह्मन् ! किं वाक् अपि सुरगुरोः विस्मयपदम्
मम तु एतां वाणीं गुणकथनपुण्येन भवतः
पुनामि इति अर्थे अस्मिन् पुरमथन ! बुद्धिः व्यवसिता ॥

( सान्वयार्थः )

**ब्रह्मन्** ! = हे व्यापक स्वरूप **मधुस्फीता** = अत्यन्त मीठे शब्दों में सनी हुई **परमम्** = सर्वोत्तम (और) **अमृतम्** = मोक्ष द्वारा अरमता देनेवाली **वाचः** = वेदवाणी की **निर्मितवतः** = रचना करने वाले **तव** = आप को **किं** = क्या **सुरगुरोः** = ब्रह्मा जी की **वाक्** = वाणी ( स्तुति ) **अपि** = भी **विस्मयपदम्** = आश्चर्य करा सकती है ? ( अर्थात् नहीं करा सकती) **तु** = तथापि **पुरमथन** ! = हे त्रिपुरासुर को मारने वाले ! **भवतः** = आपके **गुणकथनपुण्येन** = गुणों का वर्णन करने के पुण्य से **एतां** = इस (अपनी) **वाणीं** = वाणी को **पुनामि** = पवित्र करता हूँ **इति** = इसलिये **अस्मिन्** = इस स्तुतिरूप **अर्थे**—कार्य में **मम** = मेरी **बुद्धिः** = बुद्धि **व्यवसिता** = लगी है ।

**तवैश्वर्यं　　यत्तज्जगदुदयरक्षाप्रलयकृत्**
**त्रयीवस्तुव्यस्तं तिसृषु गुणभिन्नासु तनुषु ।**
**अभव्यानामस्मिन् वरद ! रमणीयामरमणीं**
**विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः ॥४॥**

( पदच्छेदः )

तव ऐश्वर्यम् यत् तत् जगदुदयरक्षाप्रलयकृत्
त्रयीवस्तु व्यस्तम् तिसृषु गुणभिन्नासु तनुषु ।
अभव्यानाम् अस्मिन् वरद ! रमणीयाम् अमरणीम्
विहन्तुम् व्याक्रोशीं विदधते इह एके जडधियः ॥

( सान्वयार्थः )

**वरद** ! = हे समस्त अभिलाषाओं को पूर्ण करने वाले ! **जगदुदयरक्षाप्रलयकृत्** = आकाशादि सभी जगत् की सृष्टि, स्थिति और संहार करने वाला, **त्रयीवस्तु** = वेदों द्वारा प्रतिपादित, **गुणभिन्नासु** = सत्त्व, रज और तमोगुण के

भेद से **तिसृषु** = तीन (ब्रह्मा, विष्णु और रुद्र) **तनुषु** = मूर्तियों में **व्यस्तम्** = बँटा हुआ (प्रकट किया हुआ) **यत्** = जो **तव** = आपका **ऐश्वर्यम्** = ऐश्वर्य (है) **तत्** = उसका **विहन्तुम्** = खण्डन करने के लिये **इह** = इस संसार में **जडधियः** = मूढ बुद्धिवाले (जड़ पदार्थों पर ही सोचने वाले) **एके** = कुछ लोग **अरमणीम्** = नुकसान पहुँचाने वाले **अस्मिन्** = (परन्तु) इस ब्रह्माण्ड भर में **अभव्यानाम्**[1] = जिनका कल्याण नहीं है, **रमणीयाम्** = उनको प्रिय लगने वाले **व्याक्रोशीं** = आक्षेपपूर्ण मिथ्या दोष, **विदधते** = लगाते हैं।

[१—भगवान पर दोष लगाने वालों का कहीं भी उद्धार नहीं हो सकता।]

**किमीहः किंकायः सखलु किमुपायस्त्रिभुवनं**
**किमाधारो धाता सृजति किमुपादान इति च।**
**अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः**
**कुतर्कोऽयं कांश्चिन् मुखरयति मोहाय जगतः ॥५॥**

( पदच्छेदः )

किमीहः किंकायः सः खलु किमुपायः त्रिभुवनम्
किमाधारः धाता सृजति किमुपादानः इति च।
अतर्क्यैश्वर्ये त्वयि अनवसरदुःस्थः हतधियः
कुतर्कः अयम् कांश्चित् मुखरयति मोहाय जगतः॥

( सान्वयार्थः )

**त्वयि** = आपके **अतर्क्यैश्वर्ये** = किसी भी तर्क से जाना नहीं जा सके ऐसे ऐश्वर्य के बारे में **सः** = वह (ईश्वर) **धाता** = जगत् का निर्माण करने वाला **किमाधारः** = किस पर बैठकर **किंकायः** = किस शरीरसे, **किमीहः** = किस प्रयत्न द्वारा, **किमुपायः** = कौन से औजारों से, **किमुपादानः** = किस चीज से **त्रिभुवनम्** = तीन लोकों को **सृजति** = बनाता है **च** = और **इति** = इसी प्रकार के दूसरे **कुतर्कः** = ( जो ठीक दीखें लेकिन विचार करने पर गलत निकलें ऐसे ) कुतर्क **जगत** = संसार को **मोहाय** = भ्रम में डालने के लिये **हतधियः** = जिनकी बुद्धि मारी गई है **कांश्चित्** = ऐसे कुछ लोगों को **मुखरयति** = बकवादी बनाते हैं, **खलु** = लेकिन **अयम्** = यह (कुतर्क) **अनवसरदुःस्थः**[1] = अवकाशरहित और असिद्ध हैं।

[ १—साधारण कर्ताओं के आधार पर ईश्वरविषयक अनुमान करते हैं परन्तु वह ईश्वर अभिन्ननिमित्तोपादान कारण है, अतः वे सब अनुमान सिद्ध नहीं होते। ]

**अजन्मानो लोकाः किमवयववन्तोऽपि जगता-**
**मधिष्ठातारं किं भवविधिरनादृत्य भवति ।**
**अनीशो वा कुर्याद् भुवनजनने कः परिकरो**
**यतो मन्दास्त्वां प्रत्यमरवर ! संशेरत इमे ॥६॥**

( पदच्छेदः )

अजन्मानः लोकाः किं अवयववन्तः अपि जगताम्
अधिष्ठातारम् किं भवविधिः अनादृश्य भवति ।
अनीशः वा कुर्यात् भुवनजनने कः परिकरः
यतः मन्दाः त्वां प्रति अमरवर ! संशेरते इमे ॥

( सान्वयार्थः )

**अमरवर** ! = हे श्रेष्ठ देव महादेव **अवयववन्तः** = जो टूट सकें ऐसे अङ्ग-वाले होने पर **अपि** = भी **लोकाः** = पृथ्वी-स्वर्गादि लोक **किं** = क्या **अजन्मानः**[1] = उत्पत्तिरहित हो सकते हैं ? ( अर्थात् नहीं ) **जगताम्** = ( जब वे लोक उत्पत्ति वाले हैं तो ) पृथिव्यादि लोकों की **भवविधिः** = उत्पत्ति **अधिष्ठातारम्** = कर्ता के **अनादृत्य** = बिना **किं** = क्या **भवति** = हो सकती है ? **वा** = यदि ( इस प्रकार संसार का कर्ता अवश्य होने पर **अनीशः** = सर्वसमर्थ ईश्वर से भिन्न ( कोई ) **भुवनजनने** = संसार को उत्पन्न **कुर्यात्** = करे **कः** = ( तो संसार को बनाने के लिये ) कौन सी, **परिकरः**[2] = सामग्री ( काम में लायेगा ) ? **यतः** = इस प्रकार प्रमाणों से ईश्वर के सिद्ध होने के कारण **इमे** = वे **मन्दाः** = मूर्ख लोग ही हैं जो **त्वां** = आपके **प्रति** = बारे में **संशेरते** = सन्देह करते हैं ।

[ १—संसार में जो जो खण्डित हो सकते हैं, वे सब उत्पत्ति होने वाले पाये जाते हैं। घड़े या कपड़े की ही भाँति स्वर्गादि सभी लोक इसी प्रकार टुकड़े वाले हैं अतः उत्पत्ति वाले भी हैं ।

२—ईश्वर को छोड़कर सभी लोग किसी सामग्री से ही वस्तु को बनाते हैं, जैसे कुम्हार मिट्टी रूप सामग्री से घड़ा बनाता है। अतः इस संसार का बनाने वाला भी यदि ईश्वर से भिन्न मानो तो किस सामग्री से उसने बनाया ? वह सामग्री कहाँ थी ? इत्यादि पूर्वश्लोक में कही हुई शंकाएँ उठ खड़ी होंगी। इसलिये ईश्वर को ही संसार का बनाने वाला मानना होगा । ]

**त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति**
**प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।**
**रुचीनां वैचित्र्याद् ऋजुकुटिलनानापथजुषां**
**नृणामेको गम्यस्त्वमसि पयसामर्णव इव ।।७।।**

( पदच्छेदः )

त्रयी सांख्यम् योगः पशुपतिमतम् वैष्णवम् इति
प्रभिन्ने प्रस्थाने परम् इदम् अदः पथ्यम् इति च ।
रुचीनाम् वैचित्र्यात् ऋजु-कुटिल-नाना-पथजुषाम्
नृणाम् एकः गम्यः त्वम् असि पयसाम् अर्णवः इव ॥

( सान्वयार्थः )

**त्रयी** = वैदिक सनातन धर्म, **सांख्यम्** = कपिलमुनि प्रणीत सांख्यमार्ग, **योगः** = पातञ्जल योगमार्ग, **पशुपतिमतम्** = शैवमार्ग, **वैष्णवम्** = वैष्णवमार्ग **इति** = इतने **प्रभिन्ने** = अलग-अलग **प्रस्थाने** = रास्तों में से **इदम्** = यह मार्ग **परम्** = सर्वोतम है **च** = या **अदः** = वह मार्ग **पथ्यम्** = हितकारी है **इति** = ऐसा **रुचीनाम्** = रुचियों के **वैचित्र्यात्** = भिन्न होने से (है)। **ऋजु-कुटिल-नाना-पथ-जुषाम्** = इन सीधे या घुमावदार रास्ते से चलने वाले **नृणाम्** = मनुष्यों को **पयसाम्** = नदियों के लिये **अर्णवः** = समुद्र की **इव** = तरह **त्वम्** = आप ही **एकः** = एकमात्र **गम्यः** = प्राप्त करने के योग्य **असि** = है ।

[ इनमें सनातन वैदिक धर्म व दूसरे मार्गों को क्रमशः सीधा और कुटिल मार्ग कहा गया है । ]

**महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः**
**कपालं चेतीयत्तव वरद ! तन्त्रोपकरणम् ।**
**सुरास्तां तामृद्धिं विदधति भवद्भ्रूप्रणिहितां**
**नहि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ।।८।।**

( पदच्छेदः )

महोक्षः खट्वाङ्गम् परशुः अजिनम् भस्म फणिनः
कपालं च इति इयत् तव वरद ! तन्त्रोपकरणम् ।

सुराः ताम् ताम् ऋद्धिम् विदधति भवद्भ्रूप्रणिहिताम्
न हि स्वात्मारामम् विषयमृगतृष्णा भ्रमयति ॥

( सान्वयार्थः )

**वरद !** = हे श्रेष्ठ मोक्ष को देने वाले ! **तव** = आप के **तन्त्रोपकरणम्** = घर की सम्पत्ति **महोक्षः** = एक बूढ़ा बैल, **खट्वाङ्गम्** = खाट का एक पाया, **परशुः** = एक फरसा, **अजिनम्** = एक गजचर्म, **भस्म** = राख, **फणिनः** = कुछ काले जहरीले साँप **च** = और **कपालम्** = एक नरमुण्ड **इति** = बस **इयत्** = ये ( सात ही हैं । ) **तु** = फिर भी **सुराः** = अन्य सारे देवता **भवद्भ्रू-प्रणिहिताम्** = आप के कृपाकटाक्ष से दी हुई **ताम्** = उन **ताम्** = प्रसिद्ध **ऋद्धिम्** = सम्पत्तियों ( सुदर्शनचक्र, ऐरावत, कल्पवृक्षादि ) को **विदधति** = धारण करते हैं ( अर्थात् भोगते हैं ), **हि** = क्यों कि **विषयमृगतृष्णा** = विषयसुखों की मृगतृष्णा का जल **स्वात्मारामम्** = चिदानन्दघन स्वरूप में रहने वाले को **न भ्रमयति** = भ्रम में नहीं डाल सकता ।

[ भगवान शंकर की यही विशेषता है कि बाहर से सम्पत्तिहीन होते हुए भी सर्व सम्पत्तियों के दाता हैं, अतः भोगमोक्षार्थी दोनों ही को उनकी उपासना कर्तव्य है । ]

**ध्रुवं कश्चित्सर्वं सकलमपरस्त्वध्रुवमिदं**
**परो ध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये ।**
**समस्तेऽप्येतस्मिन् पुरमथन ! तैर्विस्मित इव**
**स्तुवञ्जिह्रेमि त्वां न खलु ननु धृष्टा मुखरता ॥९॥**

( पदच्छेदः )

ध्रुवम् कश्चित् सर्वम् सकलम् अपरः तु अध्रुवम् इदम्
परः ध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये ।
समस्ते अपि एतस्मिन् पुरमथन ! तैः विस्मितः इव
स्तुवन् जिह्रेमि त्वाम् न खलु ननु धृष्टा मुखरता ॥

( सान्वयार्थः )

**पुरमथन !** = हे स्थूल-सूक्ष्म-कारण देह को नष्ट करके आत्मस्वरूप में स्थित करने वाले ! **कश्चित्** = कोई ( सांख्य, सत्कार्यवादी ) **सर्वम्** = स्थूल-सूक्ष्म सारे संसार को **ध्रुवम्** = उत्पत्ति-नाश से रहित ( **गदति** = कहता है । ) **तु** = तो **अपरः** = दूसरा ( बौद्धनास्तिकादि असत्कार्यवादी ) **इदम्** = इन

उदञ्चद्भुजावल्लरीदृश्यमूलोच्चलद्भ्रूलताविभ्रमभ्राजदक्षम् ।
मरुत्सुन्दरीचामरैः सेव्यमानं गणाधीशमीशानसूनुं तमीडे ॥५॥

स्फुरन्निष्ठुरालोलपिङ्गाक्षितारं कृपाकोमलोदारलीलावतारम् ।
कलाबिंदुगं गीयते योगिवर्यैर्गणाधीशमीशानसूनुं तमीडे ॥६॥

यमेकाक्षरं निर्मलं निर्विकल्पं गुणातीतमानन्दमाकारशून्यम् ।
परं पारमोंकारमाम्नायगर्भं वदन्ति प्रगल्भं पुराणं तमीडे ॥७॥

चिदानन्दसांद्राय शान्ताय तुभ्यं नमो विश्वकर्त्रे च हर्त्रे च तुभ्यम् ।
नमोऽनन्तलीलाय कैवल्यभासे नमो विश्वबीज प्रसीदेशसूनो ॥८॥

इमं संस्तवं प्रातरुत्थाय भक्त्या पठेद्यस्तु मर्त्यो लभेत्सर्वकामान् ।
गणेशप्रसादेन सिद्ध्यंति वाचो गणेशे विभौ दुर्लभं किं प्रसन्ने ॥९॥

इति श्रीशङ्कराचार्यप्रणीतं श्रीगणेशभुजंगप्रयातस्तोत्रं संपूर्णम् ॥

•

## गणेशद्वादशनामस्तोत्रम्

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥१॥
अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ।
सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥२॥
गणानामधिपश्चंडो गजवक्त्रस्त्रिलोचनः ।
प्रसन्नो भव मे नित्यं वरदातर्विनायक ॥३॥

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।
लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥४॥
धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।
द्वादशैतानि नामानि गणेशस्य तु यः पठेत् ॥५॥
विद्यार्थी लभते विद्यां धनार्थी विपुलं धनम् ।
इष्टकामं तु कामार्थी धर्मार्थी मोक्षमक्षयम् ॥६॥
विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा ।
संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥७॥

इति श्रीमुद्गलपुराणोक्तं श्रीगणेशद्वादशनामस्तोत्रं सम्पूर्णम् ॥

•

## गणेशकवचम्

गौर्युवाच

एषोऽतिचपलो दैत्यान्बाल्येऽपि नाशयत्यहो ।
अग्रे किं कर्म कर्तेति न जाने मुनिसत्तम ॥१॥

दैत्या नानाविधा दुष्टाः साधुदेवद्रुहः खलाः ।
अतोऽस्य कंठे किंचित्त्वं रक्षार्थं बद्धुमर्हसि ॥२॥

मुनिरुवाच

ध्यायेत्सिंहगतं विनायकममुं दिग्बाहुमाद्ये युगे ।
त्रेतायां तु मयूरवाहनममुं षड्बाहुकं सिद्धिदम् ॥
द्वापारे तु गजाननं युगभुजं रक्तांगरागं विभुं ।
तुर्ये तु द्विभुजं सितांगरुचिरं सर्वार्थदं सर्वदा ॥३॥
विनायकः शिखां पातु परमात्मा परात्परः ।
अतिसुंदरकायस्तु मस्तकं सुमहोत्कटः ॥४॥
ललाटं कश्यपः पातु भ्रूयुगं तु महोदरः ।
नयने भालचंद्रस्तु गजास्यस्त्वोष्ठपल्लवौ ॥५॥
जिह्वां पातु गणक्रीडश्चिबुकं गिरिजासुतः ।
वाचं विनायकः पातु दंतान् रक्षतु विघ्नहा ॥६॥
श्रवणौ पाशपाणिस्तु नासिकां चिंतितार्थदः ।
गणेशस्तु मुखं कंठं पातु देवो गणंजयः ॥७॥
स्कंधौ पातु गजस्कंधः स्तनौ विघ्नविनाशनः ।
हृदयं गणनाथस्तु हेरंबो जठरं महान् ॥८॥
धराधरः पातु पार्श्वौ पृष्ठं विघ्नहरः शुभः ।
लिंगं गुह्यं सदा पातु वक्रतुंडो महाबलः ॥९॥
गणक्रीडो जानुजंघे ऊरू मङ्गलमूर्तिमान् ।
एकदंतो महाबुद्धिः पादौ गुल्फौ सदाऽवतु ॥१०॥
क्षिप्रप्रसादनो बाहू पाणी आशाप्रपूरकः ।
अंगुलीश्च नखान्पातु पद्महस्तोऽरिनाशनः ॥११॥
सर्वांगानि मयूरेशो विश्वव्यापी सदाऽवतु ।
अनुक्तमपि यत्स्थानं धूम्रकेतुः सदाऽवतु ॥१२॥
आमोदस्त्वग्रतः पातु प्रमोदः पृष्ठतोऽवतु ।
प्राच्यां रक्षतु बुद्धीश आग्नेय्यां सिद्धिदायकः ॥१३॥

दक्षिणस्यामुमापुत्रो नैर्ऋत्यां तु गणेश्वरः ।
प्रतीच्यां विघ्नहर्ताऽव्याद्वायव्यां गजकर्णकः ॥१४॥

कौबेर्यां निधिपः पायादीशान्यामीशनंदनः ।
दिवाऽव्यादेकदंतस्तु रात्रौ संध्यासु विघ्नहृत् ॥१५॥

राक्षसासुरवेतालग्रहभूतपिशाचतः ।
पाशांकुशधरः पातु रजःसत्त्वतमःस्मृतिः ॥१६॥

ज्ञानं धर्म च लक्ष्मीं च लज्जां कीर्तिं तथा कुलम् ।
वपुर्धनं च धान्यं च गृहान् दाराः सुतान् सखीन् ॥१७॥

सर्वायुधधरः पौत्रान् मयूरेशोऽवतात्सदा ।
कपिलोऽजाविकं पातु गजाश्वान्विकटोऽवतु ॥१८॥

भूर्जपत्रे लिखित्वेदं यः कंठे धारयेत्सुधीः ।
न भयं जायते तस्य यक्षरक्षःपिशाचतः ॥१९॥

त्रिसंध्यं जपते यस्तु वज्रसारतनुर्भवेत् ।
यात्राकाले पठेद्यस्तु निर्विघ्नेन फलं लभेत् ॥२०॥

युद्धकाले पठेद्यस्तु विजयं प्राप्नुयाद्द्रुतम् ।
मारणोच्चाटनाकर्षस्तंभमोहनकर्मणि ॥२१॥

सप्तवारं जपेदेतद्दिनानामेकविंशतिम् ।
तत्तत्फलमवाप्नोति साधको नात्र संशयः ॥२२॥

एकविंशतिवारं च पठेत्तावद्दिनानि यः ।
कारागृहगतं सद्यो राज्ञा वध्यं च मोचयेत् ॥२३॥

राजदर्शनवेलायां पठेदेतत्त्रिवारतः ।
स राजानं वशं नीत्वा प्रकृतीश्च सभां जयेत् ॥२४॥

इदं गणेशकवचं कश्यपेन समीरितम् ।
मुद्गलाय च ते नाथ मांडव्याय महर्षये ॥२५॥

मह्यं स प्राह कृपया कवचं सर्वसिद्धिदम् ।
न देयं भक्तिहीनाय देयं श्रद्धावते शुभम् ॥२६॥

यस्यानेन कृता रक्षा न बाधाऽस्य भवेत्क्वचित् ।
राक्षसासुरवेतालदैत्यदानवसंभवा ॥२७॥

इति श्रीगणेशपुराणे गणेशकवचं संपूर्णम् ॥

•

## गणेशाथर्वशीर्षम्

ॐ भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवाँ सस्तनूभिः व्यशेम देवहितं यदायुः॥

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥

अथ गणेशाथर्वशीर्षं व्याख्यास्यामः॥ ॐ नमस्ते गणपतये त्वमेव प्रत्यक्षं तत्त्वमसि॥ त्वमेव केवलं कर्तासि॥ त्वमेव केवलं धर्तासि॥ त्वमेव केवलं हर्तासि॥ त्वमेव सर्वं खल्विदं ब्रह्मासि॥ त्वं साक्षादात्मासि नित्यं॥१॥ ऋतं वच्मि॥ सत्यं वच्मि॥२॥ अव त्वं मां॥ अव वक्तारम्॥ अव श्रोतारम्॥ अव दातारम्॥ अव धातारं॥ अवानूचानमव शिष्यं॥ अव पश्चात्तात्॥ अव पुरस्तात्॥ अवोत्तरात्तात्॥ अव दक्षिणात्तात्॥ अव चोर्ध्वात्तात्॥ अवाधरात्तात्॥ सर्वतो मां पाहि पाहि समंतात्॥३॥ त्वं वाङ्मयस्त्वं चिन्मयः॥ त्वमानंदमयस्त्वं ब्रह्ममयः॥ त्वं सच्चिदानंदाद्वितीयोऽसि॥ त्वं प्रत्यक्षं ब्रह्मासि॥ त्वं ज्ञानमयो विज्ञानमयोऽसि॥४॥ सर्वं जगदिदं त्वत्तो जायते॥ सर्वं जगदिदं त्वत्तस्तिष्ठति॥ सर्वं जगदिदं त्वयि लयमेष्यति॥ सर्वं जगदिदं त्वयि प्रत्येति॥ त्वं भूमिरापोऽनलोऽनिलो नभः॥ त्वं चत्वारि वाक्पदानि॥५॥ त्वं गुणत्रयातीतः॥ त्वं देहत्रयातीतः॥ त्वं कालत्रयातीतः॥ त्वं मूलाधारस्थितोऽसि नित्यं॥ त्वं शक्तित्रयात्मकः॥ त्वां योगिनो ध्यायंति नित्यम्॥ त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिंद्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चंद्रमास्त्वं ब्रह्मभूर्भुवःस्वरोम्॥६॥ गणादिं पूर्वमुच्चार्य वर्णादिं तदनंतरम्॥ अनुस्वारः परतरः अर्धेंदुलसितम्॥ तारेण रुद्धम्॥ एतत्तव मनुस्वरूपम्॥ गकारः पूर्वरूपम्। अकारो मध्यमरूपम्॥ अनुस्वारश्चांत्यरूपम्॥ बिंदुरुत्तररूपम्॥ नादः संधानम्॥ सँहिता संधिः॥ सैषा गणेशविद्या॥ गणक ऋषिः॥ निचृद्गायत्री छंदः॥ गणपतिर्देवता॥ ॐ गं गणपतये नमः॥७॥ एकदंताय विद्महे वक्रतुंडाय धीमहि॥ तन्नो दंती प्रचोदयात्॥८॥ एकदंतं चतुर्हस्तं पाशमंकुशधारिणम्। रदं च वरदं हस्तैर्बिभ्राणं मूषकध्वजम्॥ रक्तं लंबोदरं शूर्पकर्णकं रक्तवाससम्। रक्तगंधानुलिप्तांगं रक्तपुष्पैः सुपूजितम्॥ भक्तानुकंपिनं देवं जगत्कारणमच्युतम्॥ आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम्॥ एवं ध्यायति यो नित्यं स योगी योगिनां वरः॥९॥ नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्ते अस्तु लंबोदरायैकदंताय विघ्ननाशिने शिवसुताय श्रीवरदमूर्तये नमः॥१०॥

एतदथर्वशीर्षं योऽधीते ॥ स ब्रह्मभूयाय कल्पते ॥ स सर्वविघ्नैर्न बाध्यते ॥ स सर्वतः सुखमेधते ॥ स पंचमहापापात्प्रमुच्यते ॥ सायमधीयानो दिवसकृतं पापं नाशयति ॥ प्रातरधीयानो रात्रिकृतं पापं नाशयति ॥ सायंप्रातः प्रयुंजानो अपापो भवति ॥ सर्वत्राधीयानोऽपविघ्नो भवति ॥ धर्मार्थकाममोक्षं च विंदति ॥ इदमथर्वशीर्षमशिष्याय न देयम् ॥ यो यदि मोहाद्दास्यति ॥ स पापीयान् भवति ॥ सहस्रावर्तनात् ॥ यं यं काममधीते ॥ तं तमनेन साधयेत् ॥११॥ अनेन गणपतिमभिषिंचति ॥ स वाग्मी भवति ॥ चतुर्थ्यामनश्नन् जपति ॥ स विद्यावान् भवति ॥ इत्यथर्वणवाक्यम् ॥ ब्रह्माद्यावरणं विद्यात् ॥ न बिभेति कदाचनेति॥१२॥ यो दूर्वांकुरैर्यजति स वैश्रवणोपमो भवति ॥ यो लाजैर्यजति स यशोवान्भवति ॥ स मेधावान्भवति ॥ यो मोदकसहस्रेण यजति स वांछितफलमवाप्नोति ॥ यः साज्यसमिद्भिर्यजति स सर्वं लभते स सर्वं लभते ॥ अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा सूर्यवर्चस्वी भवति ॥ सूर्यग्रहे महानद्यां प्रतिमासन्निधौ वा जप्त्वा सिद्धमन्त्रो भवति ॥ महाविघ्नात्प्रमुच्यते ॥ महादोषात्प्रमुच्यते ॥ महापापात्प्रमुच्यते ॥ सर्वविद्भवति ॥ स सर्वविद्भवति ॥ य एवं वेद ॥ इत्युपनिषत् ॥१३॥ ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ भद्रं कर्णेभिः० ॥ स्वस्ति न इंद्रो० ॥ ॐ शांतिः शांतिः शांतिः ॥

इति गणेशाथर्वशीर्षं समाप्तम् ॥

•

## गणेशमहिम्नःस्तोत्रम्

अनिर्वाच्यं रूपं स्तवननिकरो यत्र गलित-
स्तथा वक्ष्ये स्तोत्रं प्रथमपुरुषस्यात्र महतः ।
यतो जातं विश्वं स्थितमपि सदा यत्र विलयः
स कीदृग्गीर्वाणः सुनिगमनुतः श्रीगणपतिः ॥१॥

गणेशं गाणेशाः शिवमिति च शैवाश्च विबुधा
रविं सौरा विष्णुं प्रथमपुरुषं विष्णुभजकाः ।
वदंत्येके शाक्ता जगदुदयमूलां परशिवां
न जाने किं तस्मै नम इति परं ब्रह्म सकलम् ॥२॥

तथेशं योगज्ञा गणपतिमिमं कर्म निखिलं
समीमांसा वेदांतिन इति परं ब्रह्म सकलम् ।
अजां सांख्यो ब्रूते सकलगुणरूपां च सततं
प्रकर्तारं न्यायस्त्वथ जगति बौद्धा धियमिति ॥३॥

कथं ज्ञेयो बुद्धेः परतर इयं बाह्यसरणि-
र्यथा धीर्यस्य स्यात्स च तदनुरूपो गणपतिः ।
महत्कृत्यं तस्य स्वयमपि महान् सूक्ष्ममणुवद्
ध्वनिर्ज्योतिर्बिन्दुर्गगनसदृशः किं च सदसत् ॥४॥
अनेकास्योऽपाराक्षिकरचरणोऽनंतहृदय-
स्तथा नानारूपो विविधवदनः श्रीगणपतिः ।
अनंताह्वः शक्त्या विविधगुणकर्मैकसमये
त्वसंख्यातानंताभिमतफलदोऽनेकविषये ॥५॥
न यस्यांतो मध्यो न च भवति चादिः सुमहता-
मलिप्तः कृत्वेत्थं सकलमपि खंवत् स च पृथक् ।
स्मृतः संस्मर्तॄणां सकलहृदयस्थः प्रियकरो
नमस्तस्मै देवाय सकलसुरवंद्याय महते ॥६॥
गणेशाद्यं बीजं दहनवनितापल्लवयुतं
मनुश्चैकार्णोऽयं प्रणवसहितोऽभीष्टफलदम् ।
सबिंदुश्चांगाद्यां गणकऋषिछंदोऽस्य च निचृत्
स देवः प्राग्बीजं विपदपि च शक्तिर्जपकृताम् ॥७॥
गकारो हेरंबः सगुण इति पुंनिर्गुणमयो
द्विधाऽप्येको जातः प्रकृतिपुरुषो ब्रह्म हि गणः ।
स चेशश्चोत्पत्तिस्थितिलयकरोऽयं प्रथमको
यतो भूतं भव्यं भवति पतिरीशो गणपतिः ॥८॥
गकारः कंठोर्ध्वं गजमुखसमो मर्त्यसदृशो
णकारः कंठाधो जठरसदृशाकार इति च ।
अधोभागः कट्यां चरण इति हीशोऽस्य च तनु-
र्विभातीत्थं नाम त्रिभुवनसमं भूर्भुवःसुवः ॥९॥
गणेशेति त्र्यर्णात्मकमपि वरं नाम सुखदं
सकृत्प्रोच्चैरुच्चारितमिति नृभिः पावनकरम् ।
गणेशस्यैकस्य प्रतिजपकरस्यास्य सुकृतं
न विज्ञातो नाम्नः सकलमहिमा कीदृशविधः ॥१०॥
गणेशेत्याह्वां यः प्रवदति मुहुस्तस्य पुरतः
प्रपश्यंस्तद्वक्त्रं स्वयमपि गणस्तिष्ठति तदा ।
स्वरूपस्य ज्ञानं त्वमुक इति नाम्नाऽस्य भवति
प्रबोधः सुप्तस्य त्वखिलमिह सामर्थ्यममुना ॥११॥

गणेशो विश्वेऽस्मिन्स्थित इह च विश्वं गणपतौ
गणेशो यत्रास्ते धृतिमतिरनैश्वर्यमखिलम् ।
समुक्तं नामैकं गणपतिपदं मंगलमयं
तदेकास्यं दृष्टेः सकलविबुधास्येक्षणसमम् ॥१२॥

बहुक्लेशैर्व्याप्तः स्मृत उत गणेशे च हृदये
क्षणात् क्लेशान्मुक्तो भवति सहसा त्वभ्रचयवत् ।
वने विद्यारंभे युधि रिपुभये कुत्र गमने
प्रवेशे प्राणांते गणपतिपदं चाशु विशति ॥१३॥

गणाध्यक्षो ज्येष्ठः कपिल अपरो मंगलनिधि-
र्दयालुर्हेरंबो वरद इति चिंतामणिरजः ।
वरानीशो ढुंढिर्गजवदननामा शिवसुतो
मयूरेशो गौरीतनय इति नामानि पठति ॥१४॥

महेशोऽयं विष्णुः सकविरविरिंदुः कमलजः
क्षितिस्तोयं वह्निः श्वसन इति खं त्वद्रिरुदधिः ।
कुजस्तारः शुक्रो गुरुरुडुबुधोऽगुश्च धनदो
यमः पाशी काव्यः शनिरखिलरूपो गणपतिः ॥१५॥

मुखं वह्निः पादौ हरिरपि विधाता प्रजननं
रविर्नेत्रे चंद्रो हृदयमपि कामोऽस्य मदनः ।
करौ शक्रः कंठ्यामवनिरुदरं भाति दशनं
गणेशस्यासन्वै क्रतुमयवपुश्चैव सकलम् ॥१६॥

अनर्घ्यालंकारैररुणवसनैर्भूषिततनुः
करींद्रास्यः सिंहासनमुपगतो भाति बुधराट् ।
स्मितः स्यात्तन्मध्येऽप्युदितरविबिंबोपमरुचिः
स्थिता सिद्धिर्वामे मतिरितरगा चामरकरा ॥१७॥

समंतात्तस्यासन् प्रवरमुनिसिद्धाः सुरगणाः
प्रशंसंतीत्यग्रे विविधनुतिभिः साञ्जलिपुटाः ।
बिडौजाद्यैर्ब्रह्मादिभिरनुवृतो भक्तनिकरै-
र्गणक्रीडामोदप्रमदविकटाद्यैः सहचरैः ॥१८॥

वशित्वाद्यष्टाद्वादशदिगणिताल्लोलमनुवाग्-
धृतिः पादूः खड्गोऽञ्जनरसबलाः सिद्धय इमाः ।
सदा पृष्ठे तिष्ठंत्यनिमिषदृशस्तन्मुखलया
गणेशं सेवंतेऽप्यतिनिकटसूपायनकराः ॥१९॥

मृगांकास्या रंभाप्रभृतिगणिका यस्य पुरतः
सुसंगीतं कुर्वंत्यपि कुतुकगंधर्वसहिताः ।
मुदः पारो नात्रेत्यनुपमपदे दोर्विगलिता
स्थिरं जातं चित्तं चरणमवलोक्यास्य विमलम् ॥२०॥

हरेणायं ध्यातस्त्रिपुरमथने चासुरवधे
गणेशः पार्वत्या बलिविजयकालेऽपि हरिणा ।
विधात्रा संसृष्टावुरगपतिना क्षोणिधरणे
नरैः सिद्धौ मुक्तौ त्रिभुवनजये पुष्पधनुषा ॥२१॥

अयं सुप्रासादे सुर इव निजानंदभुवने
महान् श्रीमानाद्यो लघुतरगृहे रंकसदृशः ।
शिवद्वारे द्वाःस्थो नृप इव सदा भूपतिगृहे
स्थितो भूत्वोमांके शिशुगणपतिर्लालनपरः ॥२२॥

अमुष्मिन्संतुष्टे गजवदन एवापि विबुधे
ततस्ते संतुष्टास्त्रिभुवनगताः स्युर्बुधगणाः ।
दयालुर्हेरंबो न च भवति यस्मिश्च पुरुषे
वृथा सर्वं तस्य प्रजननमतः सांद्रतमसि ॥२३॥

वरेण्यो भूशुंडिर्भृगुगुरुकुजा मुद्गलमुखा
ह्यपारास्तद्भक्ता जपहवनपूजास्तुतिपराः ।
गणेशोऽयं भक्तप्रिय इति च सर्वत्र गदितं
विभक्तिर्यत्रास्ते स्वयमपि सदा तिष्ठति गणः ॥२४॥

मृदः काश्चिद्धातोश्छदर्विलिखिता वापि दृषदः
स्मृता व्याजान्मूर्तिः पथि यदि बहिर्येन सहसा ।
अशुद्धोऽद्धा द्रष्टा प्रवदति तदाह्वां गणपतेः
श्रुतः शुद्धो मर्त्यो भवति दुरिताद्विस्मय इति ॥२५॥

बहिर्द्वारस्योर्ध्वं गजवदनवर्ष्मेन्धनमयं
प्रशस्तं वा कृत्वा विविधकुशलैस्तत्र निहतम् ।
प्रभावात्तन्मूर्त्या भवति सदनं मंगलमयं
विलोक्यानंदस्तां भवति जगतो विस्मय इति ॥२६॥

सिते भाद्रे मासे प्रतिशरदि मध्याह्नसमये
मृदो मूर्तिं कृत्वा गणपतितिथौ ढुंढिसदृशीम् ।
समर्चत्युत्साहः प्रभवति महान् सर्वसदने
विलोक्यानंदस्तां प्रभवति नृणां विस्मय इति ॥२७॥

तथा ह्येकः श्लोको वरयति महिम्नो गणपतेः
कथं स श्लोकेऽस्मिन् स्तुत इति भवेत्संप्रपठिते ।
स्मृतं नामास्येकं सकृदिदमनंताह्वयसमं
यतो यस्यैकस्य स्तवनसदृशं नान्यदपरम् ॥२८॥

गजवदन विभो यद्वर्णितं वैभवं ते
त्विह जनुषि ममेत्थं चारु तद्दर्शयाशु ।
त्वमसि च करुणायाः सागरः कृत्स्नदाता-
प्यति तव भृतकोऽहं सर्वदा चिंतकोऽस्मि ॥२९॥

सुस्तोत्रं प्रपठतु नित्यमेतदेव स्वानंदं प्रति गमनेऽप्ययं सुमार्गः ।
संचिन्त्य स्वमनसि तत्पदारविन्दं स्थाप्याग्रे स्तवनफलं नतीः करिष्ये ॥३०॥

गणेशदेवस्य माहात्म्यमेतद् यः श्रावयेद्वापि पठेच्च तस्य ।
क्लेशा लयं यांति लभेच्च शीघ्रं स्त्रीपुत्रविद्यार्थगृहं च मुक्तिम् ॥३१॥

इति श्रीपुष्पदन्तविरचितं श्रीगणेशमहिम्नःस्तोत्रं संपूर्णम् ॥

•

## गणेशाष्टोत्तरशतनामस्तोत्रम्

यम उवाच

गणेश हेरंब गजाननेति महोदर स्वानुभवप्रकाशिन् ।
वरिष्ठ सिद्धिप्रिय बुद्धिनाथ वदंतमेवं त्यजत प्रभीताः ॥१॥

अनेकविघ्नांतक वक्रतुंड स्वसंज्ञावासिश्च चतुर्भुजेति ।
कवीश देवांतकनाशकारिन् वदंतमेव त्यजत प्रभीताः ॥२॥

महेशसूनो गजदैत्यशत्रो वरेण्यसूनो विकट त्रिनेत्र ।
परेश पृथ्वीधर एकदंत वदंतमेवं० ॥३॥

प्रमोद मोदेति नरांतकारे षडूर्मिहंतर्गजकर्ण ढुंढे ।
द्वन्द्वारिसिन्धो स्थिरभावकारिन् वदंत० ॥४॥

विनायक ज्ञानविघातशत्रो पराशरस्यात्मज विष्णुपुत्र ।
अनादिपूज्याऽऽखुग सर्वपूज्य वदंत० ॥५॥

वैरिंच्य लंबोदर धूम्रवर्ण मयूरपालेति मयूरवाहिन् ।
सुरासुरैः सेवितपादपद्म वदंत० ॥६॥

वरिन्महाखुध्वज शूर्पकर्ण शिवाज सिंहस्थ अनंतवाह ।
दितौज विघ्नेश्वर शेषनाभे वदंत० ॥७॥

अणोरणीयो महतो महीयो रवेर्ज योगेशज ज्येष्ठराज ।
निधीश मंत्रेष च शेषपुत्र वदंत० ॥८॥

वरप्रदातारदितेश्च सूनो परात्परज्ञानद तारवक्त्र ।
गुहाग्रज ब्रह्मप पार्श्वपुत्र वदंत० ॥९॥

सिन्धोश्च शत्रो परशुप्रयाणे शमीश पुष्पप्रिय विघ्नहारिन् ।
दूर्वाभिरैरर्चित देवदेव वदंत० ॥१०॥

धियः प्रदातश्च शमीप्रियेति सुसिद्धिदातश्च सुशांतिदातः ।
अमेयमायामितविक्रमेति वदंत० ॥११॥

द्विधाचतुर्थिप्रिय कश्यपाच्च धनप्रद ज्ञानपदप्रकाशिन् ।
चिन्तामणे चित्तविहारकारिन् वदंत० ॥१२॥

यमस्य शत्रो अभिमानशत्रो विधेर्जहंतः कपिलस्य सूनो ।
विदेह स्वानंदजयोगयोग वदंत० ॥१३॥

गणस्य शत्रो कमलस्य शत्रो समस्तभावज्ञ च भालचंद्र ।
अनादिमध्यांतमय प्रचारिन् वदंत० ॥१४॥

विभो जगद्रूप गणेश भूमन् पुष्टेःपते आखुगतेति बोधः ।
कर्तुश्च पातुश्च तु संहरेति वदंत० ॥१५॥

इदमष्टोत्तरशतं दिव्यं नाम्नां तस्य पठंति ये ।
शृण्वंति तेषु वै भीताः कुरुध्वं मा प्रवेशनम् ॥१६॥

भुक्तिमुक्तिप्रदं ढुण्ढेर्धनधान्यप्रवर्धनम् ।
ब्रह्मभूतकरं स्तोत्रं जपंतं नित्यमादरात् ॥१७॥

यत्र कुत्र गणेशस्य चिह्नयुक्तानि वै भटाः ।
धामानि तत्र संभीताः कुरुध्वं मा प्रवेशनम् ॥१८॥

इति श्रीमुद्गलपुराणे यमदूतसंवादे गणेशाष्टोत्तरशतनामस्तोत्रं ॥

# ❁ शिवस्तोत्राणि ❁

## शिवषडक्षरस्तोत्रम्

ॐकारं बिन्दुसंयुक्तं नित्यं ध्यायन्ति योगिनः ।
कामदं मोक्षदं चैव ॐकाराय नमो नमः ॥१॥
नमन्ति ऋषयो देवा नमन्त्यप्सरसां गणाः ।
नरा नमन्ति देवेशं नकाराय नमो नमः ॥२॥
महादेवं महात्मानं महाध्यानपरायणम् ।
महापापहरं देवं मकाराय नमो नमः ॥३॥
शिवं शान्तं जगन्नाथं लोकानुग्रहकारकम् ।
शिवमेकपदं नित्यं शिकाराय नमो नमः ॥४॥
वाहनं वृषभो यस्य वासुकिः कंठभूषणम् ।
वामे शक्तिधरं देवं वकाराय नमो नमः ॥५॥
यत्र यत्र स्थितो देवः सर्वव्यापी महेश्वरः ।
यो गुरुः सर्वदेवानां यकाराय नमो नमः ॥६॥
षडक्षरमिदं स्तोत्रं यः पठेच्छिवसंनिधौ ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥७॥

॥ इति श्रीरुद्रयामले उमामहेश्वरसंवादे
शिवषडक्षरस्तोत्रं संपूर्णम् ॥

●

## अर्धनारीनटेश्वरस्तोत्रम्

चाम्पेयगौरार्धशरीरकायै कर्पूरगौरार्धशरीरकाय ।
धम्मिल्लकायै च जटाधराय नमः शिवायै च नमः शिवाय ॥१॥
कस्तूरिकाकुङ्कुमचर्चितायै चितारजःपुञ्जविचर्चिताय ।
कृतस्मरायै विकृतस्मराय नमः शिवायै च नमः शिवाय ॥२॥
चलत्क्वणत्कङ्कणनूपुरायै पादाब्जराजत्फणिनूपुराय ।
हेमाङ्गदायै भुजगाङ्गदाय नमः शिवायै च नमः शिवाय ॥३॥
विशालनीलोत्पललोचनायै विकासिपङ्केरुहलोचनाय ।
समेक्षणायै विषमेक्षणाय नमः शिवायै च नमः शिवाय ॥४॥

मन्दारमालाकलितालकायै कपालमालाङ्कितकन्धराय ।
दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय ॥५॥

अम्भोधरश्यामलकुन्तलायै तडित्प्रभाताम्रजटाधराय ।
निरीश्वरायै निखिलेश्वराय नमः शिवायै च नमः शिवाय ॥६॥

प्रपञ्चसृष्ट्युन्मुखलास्यकायै समस्तसंहारकताण्डवाय ।
जगज्जनन्यै जगदेकपित्रे नमः शिवायै च नमः शिवाय ॥७॥

प्रदीप्तरत्नोज्ज्वलकुण्डलायै स्फुरन्महापन्नगभूषणाय ।
शिवान्वितायै च शिवान्विताय नमः शिवायै च नम शिवाय ॥८॥

एतत्पठेदष्टकमिष्टदं यो भक्त्या स मान्यो भुवि दीर्घजीवी ।
प्राप्नोति सौभाग्यमनन्तकालं भूयात्सदा तस्य समस्तसिद्धिः ॥९॥

इति श्रीमच्छङ्करभगवत्पादप्रणीतमर्धनारीनटेश्वरस्तोत्रम् ।

●

## शंम्भुस्तवः

कैलासशैलनिलयात्कलिकल्मषघ्नाच्चंद्रार्धभूषितजटाद्वटमूलवासात् ।
नम्रोत्तमांगविनिवेशितहस्तपद्माच्छंभोः परं किमपि दैवमहं न जाने ॥१॥

नाकाधिनाथकरपल्लवसेविताङ्घ्रेर्नागास्यषण्मुखविभासितपार्श्वभागात् ।
निर्व्याजपूर्णकरुणान्निखिलामरेड्याच्छंभोः परं किमपि दैवमहं न जाने ॥२॥

मौनींद्ररक्षणकृते जितकालगर्वात्पापाब्धिशोषणविधौ जितवाडवाग्नेः ।
मारांगभस्मपरिलेपनशुक्लगात्राच्छंभोः परं किमपि दैवमहं न जाने ॥३॥

विज्ञानमुद्रितकराच्छरदिंदुशुभ्राद्विज्ञानदाननिरताज्जडपङ्क्तयेऽपि ।
वेदांतगेयचरणाद्विधिविष्णुसेव्याच्छंभोः परं किमपि दैवमहं न जाने ॥४॥

इति शंभुस्तवः संपूर्णः ॥

●

# उमामहेश्वरस्तोत्रम्

नमः शिवाभ्यां नवयौवनाभ्यां परस्पराश्लिष्टवपुर्धराभ्याम् ।
नगेन्द्रकन्यावृषकेतनाभ्यां नमो नमः शंकरपार्वतीभ्याम् ॥१॥

नमः शिवाभ्यां सरसोत्सवाभ्यां नमस्कृताभीष्टवरप्रदाभ्याम् ।
नारायणेनार्चितपादुकाभ्यां नमो नमः० ॥२॥

नमः शिवाभ्यां वृषवाहनाभ्यां विरिञ्चिविष्ण्विन्द्रसुपूजिताभ्याम् ।
विभूतिपाटीरविलेपनाभ्यां नमो नमः ॥३॥

नमः शिवाभ्यां जगदीश्वराभ्यां जगत्पतिभ्यां जयविग्रहाभ्याम् ।
जम्भारिमुख्यैरभिवन्दिताभ्यां नमो नमः० ॥४॥

नमः शिवाभ्यां परमौषधाभ्यां पञ्चाक्षरीपञ्जररञ्जिताभ्याम् ।
प्रपञ्चसृष्टिस्थितिसंहृतिभ्यां नमो नमः० ॥५॥

नमः शिवाभ्यामतिसुन्दराभ्यामत्यन्तमासक्तहृदम्बुजाभ्याम् ।
अशेषलोकैकहितङ्कराभ्यां नमो नमः० ॥६॥

नमः शिवाभ्यां कलिनाशनाभ्यां कङ्कालकल्याणवपुर्धराभ्याम् ।
कैलासशैलस्थितदेवताभ्यां नमो नमः० ॥७॥

नमः शिवाभ्यामशुभापहाभ्यामशेषलोकैकविशेषिताभ्याम् ।
अकुण्ठिताभ्यां स्मृतिसंभृताभ्यां नमो नमः० ॥८॥

नमः शिवाभ्यां रथवाहनाभ्यां रवीन्दुवैश्वानरलोचनाभ्याम् ।
राकाशशाङ्काभमुखाम्बुजाभ्यां नमो नमः० ॥९॥

नमः शिवाभ्यां जटिलन्धराभ्यां जरामृतिभ्यां च विवर्जिताभ्याम् ।
जनार्दनाब्जोद्भवपूजिताभ्यां नमो नमः० ॥१०॥

नमः शिवाभ्यां विषमेक्षणाभ्यां बिल्वच्छदामल्लिकदामभृद्भ्याम् ।
शोभावतीशान्तवतीश्वराभ्यां नमो नमः० ॥११॥

नमः शिवाभ्यां पशुपालकाभ्यां जगत्त्रयीरक्षणबद्धहृद्भ्याम् ।
समस्तदेवासुरपूजिताभ्यां नमो नमः शंकरपार्वतीभ्याम् ॥१२॥

स्तोत्रं त्रिसंध्यं शिवपार्वतीयं भक्त्या पठेद्द्वादशकं नरो यः ।
स सर्वसौभाग्यफलानि भुङ्क्ते शतायुरन्ते शिवलोकमेति ॥१३॥

इति श्रीमच्छंकरभगवतः कृतावुमामहेश्वरस्तोत्रं सम्पूर्णम् ॥

•

## शिवाष्टकम्

प्रभुं प्राणनाथं विभुं विश्वनाथं जगन्नाथनाथं सदानंदभाजाम् ।
भवद्भव्यभूतेश्वरं भूतनाथं शिवं शंकरं शंभुमीशानमीडे ॥१॥

गले रुंडमालं तनौ सर्पजालं महाकालकालं गणेशाधिपालम् ।
जटाजूटभंगोत्तरंगैर्विशालं शिवं० ॥२॥

मुदामाकरं मंडनं मंडयंतं महामंडलं भस्मभूषाधरं तम् ।
अनादिं ह्यपारं महामोहमारं शिवं० ॥३॥

तटाधोनिवासं महाट्टाट्टहासं महापापनाशं सदा सुप्रकाशम् ।
गिरीशं गणेशं सुरेशं महेशं शिवं० ॥४॥

गिरीन्द्रात्मजासंगृहीतार्धदेहं गिरौ संस्थितं सर्वदासन्नगेहम् ।
परब्रह्म ब्रह्मादिभिर्वन्द्यमानं शिवं० ॥५॥

कपालं त्रिशूलं कराभ्यां दधानं पदांभोजनम्राय कामं ददानम् ।
बलीवर्दयानं सुराणां प्रधानं शिवं० ॥६॥

शरच्चंद्रगात्रं गुणानंदपात्रं त्रिनेत्रं पवित्रं धनेशस्य मित्रम् ।
अपर्णाकलत्रं चरित्रं विचित्रं शिवं० ॥७॥

हरं सर्पहारं चिताभूविहारं भवं वेदसारं सदा निर्विकारम् ।
श्मशाने वसंतं मनोजं दहंतं शिवं ॥८॥

स्तवं यः प्रभाते नरः शूलपाणेः पठेत्सर्वदा भर्गभावानुरक्तः ।
स पुत्रं धनं धान्यमित्रं कलत्रं विचित्रः समासाद्य मोक्षं प्रयाति ॥९॥

इति श्रीशिवाष्टकं संपूर्णम् ॥

•

## विश्वनाथाष्टकम्

गंगातरंगरमणीयजटाकलापं गौरीनिरंतरविभूषितवामभागम् ।
नारायणप्रियमनंगमदापहारं वाराणसीपुरपतिं भज विश्वनाथम् ॥१॥

वाचामगोचरमनेकगुणस्वरूपं वागीशविष्णुसुरसेवितपादपीठम् ।
वामेन विग्रहवरेण कलत्रवंतं वाराणसी० ॥२॥

भूताधिपं भुजगभूषणभूषितांगं व्याघ्राजिनांबरधरं जटिलं त्रिनेत्रम् ।
पाशांकुशाभयवरप्रदशूलपाणिं वाराणसी० ॥३॥

शीतांशुशोभितकिरीटविराजमानं भालेक्षणानलविशोषितपंचबाणम् ।
नागाधिपारचितभासुरकर्णपुरं वाराणसी० ॥४॥

पंचाननं दुरितमत्तमतंगजानां नागांतकं दनुजपुंगवपन्नगानाम् ।
दावानलं मरणशोकजराटवीनां वाराणसी० ॥५॥

तेजोमयं सगुणनिर्गुणमद्वितीयमानंदकंदमपराजितमप्रमेयम् ।
नागात्मकं सकलनिष्कलमात्मरूपं वाराणसी० ॥६॥

आशां विहाय परिहृत्य परस्य निंदां पापे मतिं च सुनिवार्य मनः समाधौ ।
आदाय हृत्कमलमध्यगतं परेशं वाराणसी० ॥७॥

रागादिदोषरहितं स्वजनानुरागवैराग्यशांतिनिलयं गिरिजासहायम् ।
माधुर्यधैर्यसुभगं गरलाभिरामं वाराणसी० ॥८॥

वाराणसीपुरपतेः स्तवनं शिवस्य व्याख्यातमष्टकमिदं पठते मनुष्यः ।
विद्यां श्रियं विपुलसौख्यमनंतकीर्तिं संप्राप्य देहविलये लभते च मोक्षम् ॥९॥

विश्वनाथाष्टकमिदं यः पठेच्छिवसन्निधौ ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥१०॥

इति श्रीव्यासकृतं विश्वनाथाष्टकं संपूर्णम् ॥

•

## पशुपत्यष्टकम्

पशुपतींदुपतिं धरणीपतिं भुजगलोकपतिं च सतीपतिम् ।
प्रणतभक्तजनार्तिहरं परं भजत रे मनुजा गिरिजापतिम् ॥१॥

न जनको जननी न च सोदरो न तनयो न च भूरिबलं कुलम् ।
अवति कोऽपि न कालवशं गतं भजत रे मनुजा० ॥२॥

मुरजडिंडिमवाद्यविलक्षणं मधुरपंचमनादविशारदम् ।
प्रमथभूतगणैरपि सेवितं भजत रे मनुजा० ॥३॥

शरणदं सुखदं शरणान्वितं शिव शिवेति शिवेति नतं नृणाम् ।
अभयदं करुणावरुणालयं भजत रे मनुजा ॥४॥

नरशिरोरचितं मणिकुंडलं भुजगहारमुदं वृषभध्वजम् ।
चितिरजोधवलीकृतविग्रहं भजत रे मनुजा० ॥५॥

मखविनाशकरं शशिशेखरं सततमध्वरभाजिफलप्रदम् ।
प्रलयदग्धसुरासुरमानवं भजत रे मनुजा० ॥६॥
मदमपास्य चिरं हृदि संस्थितं मरणजन्मजरामयपीडितम् ।
जगदुदीक्ष्य समीपभयाकुलं भजत रे मनुजा० ॥७॥
हरिविरंचिसुराधिपपूजितं यमजनेशधनेशनमस्कृतम् ।
त्रिनयनं भुवनत्रितयाधिपं भजत रे मनुजा० ॥८॥
पशुपतेरिदमष्टकमद्भुतं विरचितं पृथिवीपतिसूरिणा ।
पठति संश्रृणुते मनुजः सदा शिवपुरीं वसते लभते मुदम् ॥९॥

इति श्रीपशुपत्यष्टकं संपूर्णम् ॥

•

## शिवमानसपूजास्तोत्रम्

रत्नैः कल्पितमासनं हिमजलैः स्नानं च दिव्यांबरं
नानारत्नविभूषितं मृगमदामोदांकितं चंदनम् ।
जातीचंपकबिल्वपत्ररचितं पुष्पं च धूपं तथा
दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यताम् ॥१॥
सौवर्णे नवरत्नखंडरचिते पात्रे घृतं पायसं
भक्ष्यं पंचविधं पयोदधियुतं रंभाफलं पानकम् ।
शाकानामयुतं जलं रुचिकरं कर्पूरखंडोज्ज्वलं
तांबूलं मनसा मया विरचितं भक्त्या प्रभो स्वीकुरु ॥२॥
छत्रं चामरयोर्युगं व्यजनकं चादर्शकं निर्मलं
वीणाभेरिमृदंगकाहलकलागीतं च नृत्यं तथा ।
साष्टांगप्रणतिः स्तुतिर्बहुविधा ह्येतत्समस्तं मया
संकल्पेन समर्पितं तव विभो पूजां गृहाण प्रभो ॥३॥
आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः ।
संचारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो
यद्यत्कर्म करोमि तत्तदखिलं शंभो तवाराधनम् ॥४॥
करचरणकृतं वाक्कायजं कर्मजं वा
श्रवणनयनजं वा मानसं वाऽपराधम् ।
विहितमविहितं वा सर्वमेतत्क्षमस्व
जय जय करुणाब्धे श्रीमहादेव शंभो ॥५॥

इति श्रीमच्छंकराचार्यविरचितं शिवमानसपूजास्तोत्रं समाप्तम् ॥

## श्रीकाशीविश्वनाथस्तोत्रम् ।

कण्ठे यस्य लसत्करालगरलं गङ्गाजलं मस्तके
वामाङ्गे गिरिराजराजतनया जाया भवानी सती।
नन्दिस्कन्दगणाधिराजसहिता श्रीविश्वनाथप्रभुः
काशीमन्दिरसंस्थितोऽखिलगुरुर्देयात्सदा मङ्गलम् ॥ १ ॥

यो देवैरसुरैर्मुनीन्द्रतनयैर्गन्धर्वयक्षोरगै-
र्नागैर्भूतलवासिभिर्द्विजवरैः संसेवितः सिद्धये।
या गङ्गोत्तरवाहिनी परिसरे तीर्थैरसंख्यैर्वृता
सा काशी त्रिपुरारिराजनगरी देयात्० ॥ २ ॥

तीर्थानां प्रवरा मनोरथकरी संसारपारापरा-
नन्दा नन्दिगणेश्वरैरुपहिता देवैरशेषैः स्तुता।
या शंभोर्मणिकुण्डलैककणिका विष्णोस्तपोदीर्घिका
सेयं श्रीमणिकर्णिका भगवती देयात्० ॥ ३ ॥

एषा धर्मपताकिनी तटरुहासेवावसन्नाकिनी
पश्यन्पातकिनी भगीरथतपःसाफल्यदेवाकिनी।
प्रेमारूढपताकिनी गिरिसुता सा केकरास्वाकिनी
काश्यामुत्तरवाहिनी सुरनदी देयात्० ॥ ४ ॥

विघ्नावासनिवासकारणमहागण्डस्थलालम्बितः
सिन्दूरारुणपुञ्जचन्द्रकिरणप्रच्छादिनागच्छविः ।
श्रीविश्वेश्वरवल्लभो गिरिजया सानन्दकानन्दितः
स्मेरास्यस्तव ढुण्ढिराजमुदितो देयात्० ॥ ५ ॥

केदारः कलशेश्वरः पशुपतिर्धर्मेश्वरो मध्यमो
ज्येष्ठेशो पशुपश्च कन्दुकशिवो विघ्नेश्वरो जम्बुकः।
चन्द्रेशो ह्यमृतेश्वरो भृगुशिवः श्रीवृद्धकालेश्वरो
मध्येशो मणिकर्णिकेश्वरशिवो देयात्० ॥ ६ ॥

गोकर्णस्त्वथ भारभूतनुदनुः श्रीचित्रगुप्तेश्वरो
यक्षेशस्तिलपर्णसंगमशिवो शैलेश्वरः कश्यपः।
नागेशोऽग्निशिवो निधीश्वरशिवोऽगस्तीश्वरस्तारक-
ज्ञानेशोऽपि पितामहेश्वरशिवो देयात्० ॥ ७ ॥

ब्रह्माण्डं सकलं मनोषितरसै रत्नैः पयोभिर्हरं
खेलैः पूरयते कुटुम्बनिलयान् शंभोर्विलासप्रदा।
नानादिव्यलताविभूषितवपुः काशीपुराधीश्वरी
श्रीविश्वेश्वरसुन्दरी भगवती देयात्० ॥ ८ ॥

या देवी महिषासुरप्रमथनी या चण्डमुण्डापहा
या शुम्भासुररक्तबीजदमनी शक्रादिभिः संस्तुता।
या शूलासिधनुःशराभयकरा दुर्गादिसंदक्षिणा-
माश्रित्याश्रितविघ्नशंसमयतु देयात्० ॥ ९ ॥

आद्या श्रीविकटा ततस्तु विरजा श्रीमङ्गला पार्वती
विख्याता कमला विशालनयना ज्येष्ठा विशिष्टानना।
कामाक्षी च हरिप्रिया भगवती श्रीघण्टघण्टादिका
मौर्या षष्टिसहस्रमातृसहिता देयात्० ॥१०॥

आदौ पञ्चनदं प्रयागमपरं केदारकुण्डं कुरु-
क्षेत्रं मानसकं सरोऽमृतजलं शावस्य तीर्थं परम्।
मत्स्योदर्यथ दण्डखाण्डसलिलं मन्दाकिनी जम्बुकं
घण्टाकर्णसमुद्रकूपसहितो देयात्० ॥११॥

रेवाकुण्डजलं सरस्वतिजलं दुर्वासकुण्डं ततो
लक्ष्मीतीर्थलवाङ्कुशस्य सलिलं कन्दर्पकुण्डं तथा।
दुर्गाकुण्डमसीजलं हनुमतः कुण्डप्रतापोर्जितः
प्रज्ञानप्रमुखानि वः प्रतिदिनं देयात्० ॥१२॥

आद्यः कूपवरस्तु कालदमनः श्रीवृद्धकूपोऽपरो
विख्यातस्तु पराशरस्तु विदितः कूपः सरो मानसः।
जैगीषव्यमुनेः शशाङ्कनृपतेः कूपस्तु धर्मोद्भवः
ख्यातः सप्तसमुद्रकूपसहितो देयात्० ॥१३॥

लक्ष्मीनायकबिन्दुमाधवहरिर्लक्ष्मीनृसिंहस्ततो
गोविन्दस्त्वथ गोपिकाप्रियतमः श्रीनारदः केशवः।
गङ्गाकेशववामनाख्यतदनु श्वेतो हरिः केशवः
प्रह्लादादिसमस्तकेशवगणो देयात्० ॥१४॥

लोलार्को विमलार्कमायुखरविः संवर्तसंज्ञो रवि-
र्विख्यातो द्रुपदुःखखोल्कमरुणः प्रोक्तोत्तरार्को रविः।

गङ्गार्कस्त्वथ वृद्धवृद्धिविबुधा काशीपुरीसंस्थिताः
सूर्या द्वादशसंज्ञकाः प्रतिदिनं देयात्० ॥१५॥

आद्यो ढुण्ढिविनायको गणपतिश्चिन्तामणिः सिद्धिदः
सेनाविघ्नपतिस्तु वक्रवदनः श्रीपाशपाणिः प्रभुः ।
आशापक्षविनायकाप्रषकरो मोदादिकः षड्गुणो
लोलार्कादिविनायकाः प्रतिदिनं देयात्० ॥१६॥

हेरम्बो नलकूबरो गणपतिः श्रीभीमचण्डीगणो
विख्यातो मणिकर्णिकागणपतिः श्रीसिद्धिदो विघ्नपः ।
मुण्डश्चण्डमुखश्च कष्टहरणः श्रीदण्डहस्तो गणः
श्रीदुर्गाख्यगणाधिपः प्रतिदिनं दे० ॥१७॥

आद्यो भैरवभीषणस्तदपरः श्रीकालराजः क्रमा-
च्छ्रीसंहारकभैरवस्त्वथ रुरुश्चोन्मत्तको भैरवः ।
क्रोधश्चण्डकपालभैरववरः श्रीभूतनाथादयो
ह्यष्टौ भैरवमूर्तयः प्रतिदिनं दे० ॥१८॥

आधातोऽम्बिकया सह त्रिनयनः सार्धं गणैर्नन्दितां
काशीमाशु विशन् हरः प्रथमतो वार्षध्वजेऽवस्थितः ।
आयाता दश धेनवः सुकपिला दिव्यैः पयोभिर्हरं
ख्यातं तद्वृषभध्वजेन कपिलं दे० ॥१९॥

आनन्दाख्यवनं हि चम्पकवनं श्रीनैमिषं खाण्डवं
पुण्यं चैत्ररथं त्वशाकविपिनं रम्भावनं पावनम् ।
दुर्गारण्यमथोऽपि कैरववनं वृन्दावनं पावनं
विख्यातानि वनानि वः प्रतिदिनं दे० ॥२०॥

अलिकुलदलनीलः कालदंष्ट्राकरालः
सजलजलदनीलो व्यालयज्ञोपवीतः ।
अभयवरदहस्तो डामरोद्दामनादः
सकलदुरितभक्षो मङ्गलं वो ददातु ॥२१॥

अर्धाङ्गे विकटा गिरीन्द्रतनया गौरी सती सुन्दरी
सर्वाङ्गे विलसद्विभूतिधवलो कालो विशालेक्षणः ।
वीरेशः सहनन्दिभृङ्गिसहितः श्रीविश्वनाथः प्रभुः
काशीमन्दिरसंस्थितोऽखिलगुरुर्देयात्सदा मङ्गलम् ॥२२॥

यः प्रातः प्रयतः प्रसन्नमनसा प्रेमप्रमोदाकुलः
ख्यातं तत्र विशिष्टपादभुवनेशेन्द्रादिभिर्यत्स्तुतम् ।
प्रातः प्राङ्मुखमासनोत्तमगतो ब्रूयाच्छृणोत्यादरात्
काशीवासमुखान्यवाप्य सततं प्रीते शिवे धूर्जटि ॥२३॥

इति श्रीमच्छंकराचार्यविरचितं काशीविश्वनाथस्तोत्रं ॥

•

## चन्द्रशेखराष्टकस्तोत्रम् ।

चंद्रशेखर चंद्रशेखर चंद्रशेखर पाहि माम् ।
चंद्रशेखर चंद्रशेखर चंद्रशेखर रक्ष माम् ॥ १ ॥

रत्नसानुशरासनं रजताद्रिशृंगनिकेतनं सिंजिनीकृतपन्नगेश्वरमच्युताननसायकम् ।
क्षिप्रदग्धपुरत्रयं त्रिदिवालयैरभिवंदितं चंद्रशेखरमाश्रये मम किं करिष्यति वै यमः॥
पंचपादपपुष्पगंधपदांबुजद्वयशोभितं भाललोचनजातपावकदग्धमन्मथविग्रहम् ।
भस्मदिग्धकलेवरं भवनाशनं भवमव्ययं चंद्रशेखर० ॥३॥
मत्तवारणमुख्यचर्मकृतोत्तरीयमनोहरं पंकजासनपद्मलोचनपूजितांघ्रिसरोरुहम् ।
देवसिंधुतरंगसीकरसिक्तशुभ्रजटाधरं चंद्रशेखर० ॥४॥
यक्षराजसखं भगाक्षहरं भुजंगविभूषणं शैलराजसुतापरिष्कृतचारुवामकलेवरम् ।
क्ष्वेडनीलगलं परश्वधधारिणं मृगधारिणं चंद्रशेखर० ॥५॥
कुंडलीकृतकुंडलेश्वरकुंडलं वृषवाहनं नारदादिमुनीश्वरस्तुतवैभवं भुवनेश्वरम् ।
अंधकांधकमाश्रितामरपादपं शमनांतकं चंद्रशेखर० ॥६॥
भेषजं भवरोगिणामखिलापदामपहारिणं दक्षयज्ञविनाशनं त्रिगुणात्मकं त्रिविलोचनम्
भुक्तिमुक्तिफलप्रदं सकलाघसंघनिबर्हणं चंद्रशेखर० ॥७॥
भक्तवत्सलमर्चितं निधिरक्षयं हरिदंबरं सर्वभूतपतिं परात्परमप्रमेयमनुत्तमम् ।
सोमवारिदभूहुताशनसोमपानिलखाकृतिं चंद्रशेखर० ॥८॥
विश्वसृष्टिविधायिनं पुनरेव पालनतत्परं संहरंतमपि प्रपंचमशेषलोकनिवासिनम् ।
क्रीडयंतमहर्निशं गणनाथयूथसमन्वितं चंद्रशेखर० ॥९॥
मृत्युभीतमृकंडसूनुकृतस्तवं शिवसंनिधौ यत्र कुत्र च यः पठेन्न हि तस्य मृत्युभयं भवेत्
पूर्णमायुररोगितामखिलार्थसंपदमादरं चंद्रशेखर एव तस्य ददाति मुक्तिमयत्नतः॥१०॥

इति श्रीचंद्रशेखराष्टकस्तोत्रं संपूर्णम् ॥

•

## शिवपञ्चाक्षरीनक्षत्रमालिकास्तोत्रम्

श्रीमदात्मने गुणैकसिन्धवे नमश्शिवाय धामलेशधूतलोकबन्धवे नमश्शिवाय ।
नामशोषितानमद्भवान्धवे नमश्शिवाय पामरेतरप्रधानबन्धवे नमश्शिवाय ॥१॥

कालभीतविप्रबालपाल ते नमश्शिवाय शूलभिन्नदुष्टरक्षफाल ते नमश्शिवाय ।
मूलकारणाय कालकाल ते नमश्शिवाय पालयाधुना दयालवाल ते नमश्शिवाय॥२॥

इष्टवस्तुमुख्यदानहेतवे नमश्शिवाय दुष्टदैत्यवंशधूमकेतवे नमश्शिवाय ।
सृष्टिरक्षणाय धर्मसेतवे नमश्शिवाय अष्टमूर्तये वृषेन्द्रकेतवे नमश्शिवाय ॥३॥

आपदद्रिभेदटङ्कहस्त ते नमश्शिवाय पापहारिदिव्यसिन्धुमस्त ते नमश्शिवाय ।
पापहारिणे लसन्नमस्त ते नमश्शिवाय शापदोषखण्डनप्रशस्त ते नमश्शिवाय ॥४॥

व्योमकेशदिव्यभव्यरूप ते नमश्शिवाय हेममेदिनीधरेन्द्रचाप ते नमश्शिवाय ।
नाममात्रदग्धसर्वपाप ते नमश्शिवाय कामनैकतानहृद्दुराप ते नमश्शिवाय ॥५॥

ब्रह्ममस्तकावलीनिबद्ध ते नमश्शिवाय जिह्मगेन्द्रकुण्डलप्रसिद्ध ते नमश्शिवाय ।
ब्रह्मणे प्रणीतवेदपद्धते नमश्शिवाय जिह्मकालदेहदत्तपद्धते नमश्शिवाय ॥६॥

कामनाशनाय शुद्धकर्मणे नमश्शिवाय सामगानजायमानशर्मणे नमश्शिवाय ।
हेमकान्तिचाकचक्यवर्मणे नमश्शिवाय सामजासुराङ्गलब्धचर्मणे नमश्शिवाय ॥७॥

जन्ममृत्युघोरदुःखहारिणे नमश्शिवाय चिन्मयैकरूपदेहधारिणे नमश्शिवाय ।
मन्मनोरथावपूर्तिकारिणे नमश्शिवाय मन्मनोगताय कामवैरिणे नमश्शिवाय ॥८॥

यक्षराजबन्धवे दयालवे नमश्शिवाय दक्षपाणिशोभिकाञ्चनालवे नमश्शिवाय ।
पक्षिराजवाहहृच्छयालवे नमश्शिवाय अक्षिफालवेदपूततालवे नमश्शिवाय ॥९॥

दक्षहस्तनिष्ठजातवेदसे नमश्शिवाय अक्षरात्मने नमद्बिडौजसे नमश्शिवाय ।
दीक्षितप्रकाशितात्मतेजसे नमश्शिवाय उक्षराजवाह ते सतां गते नमश्शिवाय ॥१०॥

राजताचलेन्द्रसानुवासिने नमश्शिवाय राजमाननित्यमन्दहासिने नमश्शिवाय ।
राजराजसख्यकृद्विलासिने नमश्शिवाय राजकोरकावतंसभासिने नमश्शिवाय ॥११॥

दीनमानवालिकामधेनवे नमश्शिवाय सूनबाणदाहकृत्कृशानवे नमश्शिवाय ।
स्वानुरागभक्तरत्नसानवे नमश्शिवाय दानवान्धकारचण्डभानवे नमश्शिवाय ॥१२॥

सर्वमङ्गलाकुचाग्रशायिने नमश्शिवाय सर्वदेवतागणातिशायिने नमश्शिवाय ।
पूर्वदेवनाशसंविधायिने नमश्शिवाय सर्वमन्मनोजभङ्गदायिने नमश्शिवाय ॥१३॥

स्तोकभक्तितोऽपि भक्तपोषिणे नमश्शिवाय माकरन्दसारवर्षिभाषिणे नमश्शिवाय ।
एकबिल्वदानतोऽपि तोषिणे नमश्शिवाय नैकजन्मपापजालशोषिणे नमश्शिवाय ॥१४

सर्वजीवरक्षणैकशीलिने नमश्शिवाय पार्वतीप्रियाय भक्तपालिने नमश्शिवाय ।
दुर्विदग्धदैत्यसैन्यदारिणे नमश्शिवाय शर्वरीशधारिणे कपालिने नमश्शिवाय ॥१५॥

पाहि मामुमामनोज्ञदेह ते नमश्शिवाय देहि मे वरं सिताद्रिगेह ते नमश्शिवाय ।
मोहितर्षिकामिनीसमूह ते नमश्शिवाय स्वेहितप्रसन्न कामदोह ते नमश्शिवाय ॥१६॥

मङ्गलप्रदाय गोतुरङ्ग ते नमश्शिवाय गङ्गयात रङ्गितोत्तमाङ्ग ते नमश्शिवाय ।
सङ्गरप्रवृत्तवैरिभङ्ग ते नमश्शिवाय अङ्गजारये करेकुरङ्ग ते नमश्शिवाय ॥१७॥

ईहितक्षणप्रदानहेतवे नमश्शिवाय आहिताग्निपालकोक्षकेतवे नमश्शिवाय ।
देहकान्तिधूतरौप्यधातवे नमश्शिवाय गेहदुःखपुन्जधूमकेतवे नमश्शिवाय ॥१८॥

त्र्यक्ष दीनसत्कृपाकटाक्ष ते नमश्शिवाय दक्षसप्ततन्तुनाशदक्ष ते नमश्शिवाय ।
ऋक्षराजभानुपावकाक्ष ते नमश्शिवाय रक्ष मां प्रसन्नमात्ररक्ष ते नमश्शिवाय ॥१९॥

न्यंकुपाणये शिवङ्कराय ते नमश्शिवाय सङ्कटाब्धितीर्णकिङ्कराय ते नमश्शिवाय ।
पङ्कभीषिताभयङ्कराय ते नमश्शिवाय पङ्कजाननाय शङ्कराय ते नमश्शिवाय ॥२०॥

कर्मपाशनाश नीलकण्ठ ते नमश्शिवाय शर्मदाय नर्यभस्मकण्ठ ते नमश्शिवाय ।
निर्ममर्षिसेवितोपकण्ठ ते नमश्शिवाय कुर्महे नतीर्नमद्विकुण्ठ ते नमश्शिवाय ॥२१॥

विष्टपाधिपाय नम्रविष्णवे नमश्शिवाय शिष्टविप्रहृद्गुहाचरिष्णवे नमश्शिवाय ।
इष्टवस्तुनित्यतुष्टजिष्णवे नमश्शिवाय कष्टनाशनाय लोकजिष्णवे नमश्शिवाय॥२२

अप्रमेयदिव्यसुप्रभाव ते नमश्शिवाय सत्प्रपन्नरक्षणस्वभाव ते नमश्शिवाय ।
स्वप्रकाश निस्तुलानुभाव ते नमश्शिवाय विप्रडिम्भदर्शितार्द्रभाव ते नमश्शिवाय ॥

सेवकाय मे मृड प्रसीद ते नमश्शिवाय भावलभ्य तावकप्रसाद ते नमश्शिवाय ।
पावकाक्ष देवपूज्यपाद ते नमश्शिवाय तावकाङ्घ्रिभक्तदत्तमोद ते नमश्शिवाय॥२४

भुक्तिमुक्तिदिव्यभोगदायिने नमश्शिवाय शक्तिकल्पितप्रपञ्चभागिने नमश्शिवाय ।
भक्तसङ्कटापहारयोगिने नमश्शिवाय युक्तसन्मनःसरोजयोगिने नमश्शिवाय ॥२५॥

अन्तकान्तकाय पापहारिणे नमश्शिवाय शान्तमाय दन्तिचर्मधारिणे नमश्शिवाय ।
सन्तताश्रितव्यथाविदारिणे नमश्शिवाय जन्तुजातनित्यसौख्यकारिणे नमश्शिवाय ॥

शूलिने नमो नमः कपालिने नमश्शिवाय पालिने विरञ्चितुण्डमालिने नमश्शिवाय ।
लीलिने विशेषरुण्डमालिने नमश्शिवाय शीलिने नमः प्रपुण्यशालिने नमश्शिवाय ॥

शिवपञ्चाक्षर मुद्रां चतुष्पदोल्लासपद्यमणिघटिताम् ।
नक्षत्रमालिकामिह दधदुपकण्ठं नरो भवेत्सोमः ॥

॥ इति शिवपञ्चाक्षरीनक्षत्रमालिकास्तोत्रं संपूर्णम् ॥

## वेदसारशिवस्तवस्तोत्रम्

पशूनां पतिं पापनाशं परेशं गजेंद्रस्य कृत्तिं वसानं वरेण्यम् ।
जटाजूटमध्ये स्फुरद्गांगवारिं महादेवमेकं स्मरामि स्मरारिम् ॥१॥
महेशं सुरेशं सुरारातिनाशं विभुं विश्वनाथं विभूत्यंगभूषम् ।
विरूपाक्षमिन्द्वर्कवह्नि त्रिनेत्रं सदानंदमीडे प्रभुं पंचवक्त्रम् ॥२॥
गिरीशं गणेशं गले नीलवर्णं गवेंद्राधिरूढं गुणातीतरूपम् ।
भवं भास्वरं भस्मना भूषिताङ्गं भवानीकलत्रं भजे पंचवक्त्रम् ॥३॥
शिवाकांत शंभो शशांकार्धमौले महेशान शूलिन् जटाजूटधारिन् ।
त्वमेको जगद्व्यापको विश्वरूप प्रसीद प्रसीद प्रभो पूर्णरूप ॥४॥
परात्मानमेकं जगद्बीजमाद्यं निरीहं निराकारमोंकारवेद्यम् ।
यतो जायते पाल्यते येन विश्वं तमीशं भजे लीयते यत्र विश्वम् ॥५॥
न भूमिर्न चापो न वह्निर्न वायुर्न चाकाशमास्ते न तंद्रा न निद्रा ।
न ग्रीष्मो न शीतं न देशो न वेषो न यस्यास्ति मूर्तिस्त्रिमूर्तिं तमीडे ॥६॥
अजं शाश्वतं कारणं कारणानां शिवं केवलं भासकं भासकानाम् ।
तुरीयं तमः पारमाद्यंतहीनं प्रपद्ये परं पावनं द्वैतहीनम् ॥७॥
नमस्ते नमस्ते विभो विश्वमूर्ते नमस्ते नमस्ते चिदानंदमूर्ते ।
नमस्ते नमस्ते तपोयोगगम्य नमस्ते नमस्ते श्रुतिज्ञानगम्य ॥८॥
प्रभो शूलपाणे विभो विश्वनाथ महादेव शंभो महेश त्रिनेत्र ।
शिवाकांत शांत स्मरारे पुरारे त्वदन्यो वरेण्यो न मान्यो न गण्यः ॥९॥
शंभो महेश करुणामय शूलपाणे गौरीपते पशुपते पशुपाशनाशिन् ।
काशीपते करुणया जगदेतदेकस्त्वं हंसि पासि विदधासि महेश्वरोऽसि ॥१०॥
त्वत्तो जगद्भवति देव भव स्मरारे त्वय्येव तिष्ठति जगन्मृड विश्वनाथ ।
त्वय्येव गच्छति लयं जगदेतदीश लिंगात्मकं हर चराचरविश्वरूपिम् ॥११॥

इति श्रीमच्छंकराचार्यविरचितो वेदसारशिवस्तवः संपूर्णः ॥

•

## शिवापराधक्षमापनस्तोत्रम्

आदौ कर्मप्रसंगात् कलयति कलुषं मातृकुक्षौ स्थितं मां
विण्मूत्रामेध्यमध्ये क्वथयति नितरां जाठरो जातवेदाः ।
यद्यद्वै तत्र दुःखं व्यथयति नितरां शक्यते केन वक्तुं
क्षंतव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥१॥

बाल्ये दुःखातिरेकान्मललुलितवपुः स्तन्यपाने पिपासा
नो शक्तश्चेंद्रियेभ्यो भवगुणजनिता जन्तवो मां तुदन्ति ।
नानारोगादिदुःखाद्रुदनपरवशः शंकरं न स्मरामि
क्षंतव्यो मेऽपराधः शिव शिव० ॥२॥

प्रौढोऽहं यौवनस्थो विषयविषधरैः पंचभिर्मर्मसंधौ
दष्टो नष्टोऽविवेकः सुतधनयुवतिस्वादसौख्ये निषण्णः ।
शैवीचिंताविहीनं मम हृदयमहो मानगर्वाधिरूढं
क्षंतव्यो मेऽपराधः शिव शिव० ॥३॥

वार्धक्ये चेंद्रियाणां विगतगतिमतिश्चाधिदैवादितापैः
पापै रोगैर्वियोगैस्त्वनवसितवपुः प्रौढिहीनं च दीनम् ।
मिथ्यामोहाभिलाषैर्भ्रमति मम मनो धूर्जटेर्ध्यानशून्यं
क्षंतव्यो मेऽपराधः शिव शिव० ॥४॥

नो शक्यं स्मार्तकर्म प्रतिपदगहनप्रत्यवायाकुलाख्यं
श्रौते वार्ता कथं मे द्विजकुलविहिते ब्रह्ममार्गे सुसारे ।
ज्ञातो धर्मो विचारैः श्रवणमननयोः किं निदिध्यासितव्यं
क्षंतव्यो मेऽपराधः शिव शिव० ॥५॥

स्नात्वा प्रत्यूषकाले स्नपनविधिविधौ नाहृतं गांगतोयं
पूजार्थं वा कदाचिद्बहुतरगहनात्खंडबिल्वीदलानि ।
नानीता पद्ममाला सरसि विकसिता गंधपुष्पैस्त्वदर्थं
क्षंतव्यो मेऽपराधः शिव शिव० ॥६॥

दुग्धैर्मध्वाज्ययुक्तैर्दधिसितसहितैः स्नापितं नैव लिंगं
नो लिप्तं चंदनाद्यैः कनकविरचितैः पूजितं न प्रसूनैः ।
धूपैः कर्पूरदीपैर्विविधरसयुतैर्नैव भक्ष्योपहारैः
क्षंतव्यो मेऽपराधः शिव शिव० ॥७॥

ध्यात्वा चित्ते शिवाख्यं प्रचुरतरधनं नैव दत्तं द्विजेभ्यो
हव्यं ते लक्षसंख्यैर्हुतवहवदने नार्पितं बीजमंत्रैः ।
नो तप्तं गांगतीरे व्रतजपनियमै रुद्रजाप्यैर्न वेदैः
क्षंतव्यो मेऽपराधः शिव शिव० ॥८॥

स्थित्वा स्थाने सरोजे प्रणवमयमरुत्कुंडले सूक्ष्ममार्गे
शांते स्वांते प्रलीने प्रकटितविभवे ज्योतिरूपेऽपराख्ये ।
लिंगज्ञे ब्रह्मवाक्ये सकलतनुगतं शंकरं न स्मरामि
क्षंतव्यो मेऽपराधः शिव शिव० ॥९॥

नग्नो निःसंगशुद्धस्त्रिगुणविरहितो ध्वस्तमोहांधकारो
नासाग्रे न्यस्तदृष्टिर्विदितभवगुणो नैव दृष्टः कदाचित् ।
उन्मन्याऽवस्थया त्वां विगतकलिमलं शंकरं न स्मरामि
क्षंतव्यो मेऽपराधः शिव शिव० ॥१०॥
चंद्रोद्भासितशेखरे स्मरहरे गंगाधरे शंकरे
सर्पैर्भूषितकंठकर्णविवरे नेत्रोत्थवैश्वानरे ।
दंतित्वक्कृतसुंदरांबरधरे त्रैलोक्यसारे हरे
मोक्षार्थं कुरु चित्तवृत्तिमखिलामन्यैस्तु किं कर्मभिः ॥११॥
किं वाऽनेन धनेन वाजिकरिभिः प्राप्तेन राज्येन किं
किं वा पुत्रकलत्रमित्रपशुभिर्देहेन गेहेन किम् ।
ज्ञात्वैतत्क्षणभंगुरं सपदि रे त्याज्यं मनो दूरतः
स्वात्मार्थं गुरुवाक्यतो भज भज श्रीपार्वतीवल्लभम् ॥१२॥
आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनं
प्रत्यायांति गताः पुनर्न दिवसाः कालो जगद्भक्षकः ।
लक्ष्मीस्तोयतरंगभंगचपला विद्युच्चलं जीवितं
तस्मान्मां शरणागतं शरणद त्वं रक्ष रक्षाधुना ॥१३॥
करचरणकृतं वाक्कायजं कर्मजं वा
श्रवणनयनजं वा मानसं वाऽपराधम् ।
विहितमविहितं वा सर्वमेतत्क्षमस्व
जय जय करुणाब्धे श्रीमहादेव शंभो ॥१४॥
इति श्रीमच्छंकराचार्यविरचितं शिवापराधक्षमापनस्तोत्रम् ॥

•

## शिवमीडेस्तवः

वैलक्षण्यं धामसु यस्य त्रिषु सिद्धं भोग्याद्भोक्तुर्भोगत एवं त्रिविधाच्च ।
यस्माच्छ्रुत्या नास्ति च कश्चिद् व्यतिरिक्तस्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥१॥
एको ध्येयस्त्वात्मतयेति हि वेदान्ते योऽन्यत्सर्वं श्रूयत एवं सन्त्यज्य ।
सर्वव्यापी भाति च भगवान् यो देवस्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥२॥
आकाशोयं स्याद्यदि दहरोनानन्दः कोह्येवान्यात्प्राणभृदत्र गतप्राण्यात् ।
भूमानन्दः प्रत्यगभिन्नः सकलात्मा तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥३॥
आदित्यान्तर्यामिणमोश्वरमात्मेच्छुर्गायत्र्यैवानन्यमिहान्वहमाराध्य ।
प्राप्नोत्याराद्विष्णुपदं तच्छिवसंज्ञं तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥४॥

दुःखस्यान्तमभीप्सव एनं सद्रूपं ब्रह्माभिख्यं स्वात्मतया हृदि यं मत्वा ।
मुक्तिं यान्तीत्यत्र तु नान्योस्ति च पन्था तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥५॥
सत्यज्ञानानन्तरसोस्त्यपि चास्थूलो ह्रस्वोजो योऽणुत्वविहीनो न च दीर्घः ।
अद्वैतात्मकपूर्णशिवो यो ब्रह्माख्यस्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥६॥
ध्यातृध्यानध्येयभिदां यः परिहृत्य स्वस्थो भूत्वा केवल एकः परिशिष्टः ।
स्वानन्यत्वं पश्यति यज्ञस्समभक्तस्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥७॥

यस्यैवैकम्पादममुं वै भुवनाख्यं त्यक्त्वा नानाकारतयैवत्रिभिरन्यैः ।
ऐक्यं लब्ध्वा भाति च योगी क्रमशोऽस्मिन् तं चिन्मात्रं साक्षिणमेकं शिवमीडे ।८॥
सर्वात्मस्थं स्वात्मतया सम्प्रतिपन्नस्स्वास्थ्यं वै तत्सर्वतया च प्रतिपन्नः ।
पूर्णानन्दो मादृगनन्तः पुरुषस्स्यात्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥९॥
सर्वज्ञत्वं मायिकमीशे सन्त्यक्त्वा किञ्चिज्ज्ञत्वं तद्वदमुष्मिन्नपि जीवे ।
चिन्मात्रैकं पश्यति योगी लक्षणया तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥१०॥

सर्वज्ञोपि स्वाधिकहीनः सकलज्ञः किञ्चिज्ज्ञोऽपि स्वयमिहहीनः किञ्चिज्ज्ञः ।
ज्ञानाज्ञानाभ्यामपि चान्यः परमात्मा तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥११॥
ओङ्कारार्थो हंसरहस्यः परिपूर्णः प्रत्यग्रूपो भाति च पञ्चाक्षरगम्यः ।
ईशस्सोस्मीत्येव समाध्या विदितस्स्यात्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥१२॥
शैवागम्यो वैष्णवगम्यश्शिव एकः सर्वैरन्यैर्वेदमतस्थैर्न च गम्यः ।
शैवाद्वैतध्यातृभिरेव तु सङ्गम्यस्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥१३॥

ज्योतिर्लिङ्गं स्वात्मनि दृष्ट्वा देहादीन् लोकान् हित्वाऽखण्डमनन्तं परिपश्यन् ।
जीवन्मुक्तोहंकृतहीनश्शिवयोगी तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥१४॥
नित्यं शान्तं निर्गुणमार्यं निखिलस्थं दीपाकारं सद्गुरुतोऽयं मुद्रिकया ।
दृष्ट्वा नित्याभ्यासवशाद्यः परिपूर्णस्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥१५॥
अक्षिण्येनं दक्षिण ईशं शशितुल्यं यं व्योम्न्येकीकृत्य शिवेतं परमे च ।
सर्वात्मानस्संसृतिपाशादिह मुक्तास्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥१६॥

दृश्यो देहो नायमहं सत्सुखमात्रं चिद्रूपोस्मीत्यैक्यमुपेत्योपरि येन ।
संसारोत्थं शोकमनन्तं विजहाति तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥१७॥
आकाशादीन् भूतविकारानपलाप्य स्वाधिष्ठानं शेषितमस्मीत्याचिरेण ।
ज्ञात्वा युक्त्या मुञ्चति चान्या इह वाचस्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥१८॥

ज्ञाते यस्मिन् सर्वमिदं स्याद्विदितं स्यादज्ञातेस्मिन् नैव समस्तं विदितं स्यात् ।
नानुध्यायाद्यद्विदसत्सद्बहुशब्दांस्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥१९॥
वाचं त्यक्त्वा सद्गुरुवक्त्राच्छ्रुतिवाक्याद्वक्तारं यं प्रत्यगभिख्यं परिपूर्णम् ।
लोकातीतं नैव विजानन्न भवभावस्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥२०॥

यो वै भूमा यस्सुखरूपः परमात्मा द्यावापृथ्वी चापि यदन्तर्गुणहीनः ।
प्राणप्राणो देह इहाहंपदलक्ष्यस्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥२१॥
प्रागोङ्कारं षोडशधैव प्रविभज्य स्वत्वेनास्तान् भागचतुष्कं तुर्यांशन् ।
सम्यक्पश्यंस्तत्र चतुर्थं पदमेनं तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥२२॥
यस्मिन्नोतं प्रोतमितीत्थं जगदेतत्तात्पर्येणैवोपनिषद्भिः प्रतिपाद्यं ।
सोहं नान्यः कश्चन मन्तो विदुरेवं तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥२३॥
अव्यक्तादप्यस्ति परो यः पुरुषोऽन्ते यस्मिन्नेतत्कल्पितमन्यैः श्रुतिहीनैः ।
ज्योतीरूपं भेदविहीनं परमार्थं तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥२४॥
तत्त्वं त्वं तत्सोऽहमहं सोऽस्म्यखिलात्मेत्यैक्यं विद्वानत्र विदित्वा विमलात्मा ।
स्वात्मारामोऽखण्डरसात्मा श्रुतिसिद्धस्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥२५॥
द्युभ्वादीनामायतनं यस्सकलानामात्मैतेषां प्राणभृतामप्यखिलात्मा ।
जीवेभ्योऽन्योऽप्यत्र यदन्ये न च जीवास्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥२६॥
आनन्दो हि स्यात्प्रचुरोऽयं मयहन्तः पुच्छब्रह्मेत्याहुरसत्तच्छ्रुतिहानेः ।
नायं जीवः पञ्चमकोशोऽतीतत्वात्तं चिमान्त्रं साक्षिणमेकं शिवमीडे ॥२७॥
कौक्षेयाग्निर्नैव च वैश्वानरशब्दो भूताग्निर्वानापि तदीयो न च देवः ।
शारीरो वा नासितु विमलः कूटस्थस्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥२८॥
जीवाजीवावत्र शरीरे वसतो द्वावेको भुङ्क्ते कर्मफलं यस्त्वितरोऽस्मात् ।
ईशोऽनश्नन् पाययतीतरवाक्ये यं तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥२९॥
छांदोग्ये हि श्रूयत एवं तत्सत्यं तत्त्वं पुत्रायारुणिवाक्यं निरवद्यम् ।
तन्निष्ठस्यात्र तथा मुक्त्युपदेशात्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥३०॥
अव्यक्तस्येवेक्षति कर्मानुपपत्तेस्सांख्योक्तस्याशब्दतयापि च जाड्येन ।
न ज्ञेयत्वं यस्य तु नोक्तानुपपत्तिस्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥३१॥
लीलारूपा कवदेषा खलु सृष्टिस्त्वमीशस्यास्यां नैव फलं परितृप्तस्य ।
कर्मापेक्षं ज्ञानिषु लोके विषमत्वं तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥३२॥
औदासीन्यं वास्तवमात्मनि संसिद्धं स्रष्टृत्वादिशक्तिगधर्मोप्युपपन्नः ।
नाव्यक्तादेरित्युपदेशादसकृद्धै तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥३३॥
जीवस्यैवोत्क्रांतिरमुष्माद्गतिरेर्न लोकं प्रत्युष्यागतिरन्यस्य तु भूम्नः ।
निश्चेष्टत्वान्नापि च बुद्धेर्जडतायास्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥३४॥
संज्ञामूर्त्योः क्लृप्तिरधीशस्य हि कर्म त्रेधैकैकां कुर्वत एवं श्रुतिशब्दात् ।
यस्माजीवोऽनन्य इतीहाभ्युपगम्यस्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥३५॥
भूतैर्जीवोनन्तरदेहप्रतिपत्तौ रंहत्येवं कर्मफलानामुपभुक्त्यै ।
रेतस्सिग्योगोथ भविष्यत्यह यस्मात्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥३६॥

विद्याभेदो वेद्यभिदापि श्रुतिशीर्षैर्नैवोच्येत प्राकृतदृष्टेस्सगुणा स्यात् ।
अन्या शैवी निर्गुणरूपा यदधीना तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥३७॥

कार्योत्कर्षात्सर्वपदार्थे शिवदृष्टिस्तं वान्तेऽस्मिश्छास्ति च शास्त्रं सदयं यम् ।
विन्नो वेदोत्कर्षयनन्यप्यपकर्षं तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥३८॥

भूमानंदस्सैंन्धवतुल्यस्त्वविनाशः कूटस्थात्मा ह्यक्षररूपो क्षरगम्यः ।
यस्य ब्रह्मक्षत्रमपि स्यादशनार्थं तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥३९॥

पुरुषस्यास्मिन्वागपि चित्ते चित्तं च प्राणे प्राणस्तेजसि तेजो विदुषोऽस्मिन् ।
यद्रूपं तद्देहायोगेपरिलीनं तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥४०॥

न्यूनाधिक्यं नोत्तरदक्षिणसंज्ञाभ्यामुत्क्रान्तस्याप्यत्र विदुस्स्यादयनाभ्याम् ।
भित्वादित्यं गच्छति सिद्धं ब्रह्मस्थं तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥४१॥

उत्पत्त्यादिर्व्याहृतिवर्जं त्वणिमादिस्यादैश्वर्यं मुक्तभवानां विदुषां च ।
नावर्तन्ते लोकमिमं ते खलु शब्दात्तं चिन्मात्रं साक्षिणमेकं शिवमीडे ॥४२॥

इति ज्ञानवासिष्ठे चतुर्थपादे षष्ठाध्याये शिवमीडेस्तवः संपूर्णः ।

•

## दारिद्र्यदहनशिवस्तोत्रम्

विश्वेश्वराय नरकार्णवतारणाय कर्णामृताय शशिशेखरधारणाय ।
कर्पूरकांतिधवलाय जटाधराय दारिद्र्यदुःखदहनाय नमः शिवाय ॥१॥

गौरिप्रियाय रजनीशकलाधराय कालांतकाय भुजगाधिपकंकणाय ।
गंगाधराय गजराजविमर्दनाय दारिद्र्य० ॥२॥

भक्तिप्रियाय भयरोगभयापहाय उग्राय दुर्गभवसागरतारणाय ।
ज्योतिर्मयाय गुणनामसुनृत्यकाय दारिद्र्य० ॥३॥

चर्माम्बराय शवभस्मविलेपनाय भालेक्षणाय मणिकुंडलमंडिताय ।
मंजीरपादयुगलाय जटाधराय दारिद्र्य० ॥४॥

पंचाननाय फणिराजविभूषणाय हेमांशुकाय भुवनत्रयमंडिताय ।
आनंदभूमिवरदाय तमोमयाय दारिद्र्य० ॥५॥

भानुप्रियाय भवसागरतारणाय कालांतकाय कमलासनपूजिताय ।
नेत्रत्रयाय शुभलक्षणलक्षिताय दारिद्र्य० ॥६॥

रामप्रियाय रघुनाथवरप्रदाय नागप्रियाय नरकार्णवतारणाय ।
पुण्येषु पुण्यभरिताय सुरार्चिताय दारिद्र्य० ॥७॥

मुक्तेश्वराय फलादाय गणेश्वराय गीतप्रियाय वृषभेश्वरवाहनाय।
मातंगचर्मवसनाय महेश्वराय दारिद्र्य० ॥८॥

वसिष्ठेन कृतं स्तोत्रं सर्वरोगनिवारणम्।
सर्वसंपत्करं शीघ्रं पुत्रपौत्रादिवर्धनम् ॥
त्रिसंध्यं यः पठेन्नित्यं स हि स्वर्गमवाप्नुयात् ॥९॥

॥ इति श्रीवसिष्ठविरचितं दारिद्र्यदहनशिवस्तोत्रं सम्पूर्णम् ॥

•

## प्रदोषस्तोत्राष्टकम्

सत्यं ब्रवीमि परलोकहितं ब्रवीमि सारं ब्रवीम्युपनिषद्धृदयं ब्रवीमि।
संसारमुल्बणमसारमवाप्य जंतोः सारोऽयमीश्वरपदांबुरुहस्य सेवा ॥१॥

ये नार्चयंति गिरिशं समये प्रदोषे ये नार्चितं शिवमपि प्रणमंति चान्ये।
एतत्कथां श्रुतिपुटैर्न पिबंति मूढास्ते जन्मजन्मसु भवन्ति नरा दरिद्राः ॥२॥

ये वै प्रदोषसमये परमेश्वरस्य कुर्वन्त्यनन्यमनसोंऽघ्रिसरोजपूजाम्।
नित्यं प्रवृद्धधनधान्यकलत्रपुत्रसौभाग्यसंपदधिकास्त इहैव लोके ॥३॥

कैलासशैलभुवने त्रिजगज्जनित्रीं गौरीं निवेश्य कनकाचितरत्नपीठे।
नृत्यं विधातुमभिवांछति शूलपाणौ देवाः प्रदोषसमये नु भजंति सर्वे ॥४॥

वाग्देवी धृतवल्लकी शतमुखो वेणुं दधत्पद्मज-
स्तालोन्निद्रकरो रमा भगवती गेयप्रयोगान्विता।
विष्णुः सांद्रमृदंगवादनपटुर्देवाः समंतात्स्थिताः
सेवंते तमनु प्रदोषसमये देवं मृडानीपतिम् ॥५॥

गंधर्वयक्षपतगोरगसिद्धसाध्यविद्याधरामरवराप्सरसां गणांश्च।
येऽन्ये त्रिलोकनिलयाः सहभूतवर्गाः प्राप्ते प्रदोषसमये हरपार्श्वसंस्थाः ॥६॥

अतः प्रदोषे शिव एक एव पूज्योऽथ नान्ये हरिपद्मजाद्याः।
तस्मिन्महेशे विधिनेज्यमाने सर्वे प्रसीदंति सुराधिनाथाः ॥७॥

एष ते तनयः पूर्वजन्मनि ब्राह्मणोत्तमः।
प्रतिग्रहैर्वयो निन्ये न दानाद्यैः सुकर्मभिः ॥८॥
अतो दारिद्र्यमापन्नः पुत्रस्ते द्विजभामिनि।
तद्दोषपरिहारार्थं शरणं यातु शंकरम् ॥९॥

॥ इति श्रीस्कांदोक्तं प्रदोषस्तोत्राष्टकं संपूर्णम् ॥

•

## अभयंकरं शिवरक्षास्तोत्रम्

अस्य श्रीशिवरक्षास्तोत्रमन्त्रस्य याज्ञवल्क्य ऋषिः, श्रीसदाशिवो देवता, अनुष्टुप् छन्दः, श्रीसदाशिवप्रीत्यर्थं शिवरक्षास्तोत्रजपे विनियोगः ।।

चरितं देवदेवस्य महादेवस्य पावनम् ।
अपारं परमोदारं चतुर्वर्गस्य साधनम् ।।१।।

गौरीविनायकोपेतं पञ्चवक्त्रं त्रिनेत्रकम् ।
शिवं ध्यात्वा दशभुजं शिवरक्षां पठेन्नरः ।।२।।

गङ्गाधरः शिरः पातु भालमर्धेन्दुशेखरः ।
नयने मदनध्वंसी कर्णौ सर्पविभूषणः ।।३।।

घ्राणं पातु पुरारातिर्मुखं पातु जगत्पतिः ।
जिह्वां वागीश्वरः पातु कन्धरां शितिकन्धरः ।।४।।

श्रीकण्ठः पातु मे कण्ठं स्कन्धौ विश्वधुरन्धरः ।
भुजौ भूभारसंहर्ता करौ पातु पिनाकधृक् ।।५।।

हृदयं शंकरः पातु जठरं गिरिजापतिः ।
नाभिं मृत्युंजयः पातु कटी व्याघ्राजिनाम्बरः ।।६।।

सक्थिनी पातु दीनार्तशरणागतवत्सलः ।
ऊरू महेश्वरः पातु जानुनी जगदीश्वरः ।।७।।

जङ्घे पातु जगत्कर्ता गुल्फौ पातु गणाधिपः ।
चरणौ करुणासिंधुः सर्वाङ्गानि सदाशिवः ।।८।।

एतां शिवबलोपेतां रक्षां यः सुकृती पठेत् ।
स भुक्त्वा सकलान्कामान् शिवसायुज्यमाप्नुयात् ।।९।।

ग्रहभूतपिशाचाद्यास्त्रैलोक्ये विचरन्ति ये ।
दूरादाशु पलायन्ते शिवनामाभिरक्षणात् ।।१०।।

अभयंकरनामेदं कवचं पार्वतीपतेः ।
भक्त्या बिभर्ति यः कण्ठे तस्य वश्यं जगत्त्रयम् ।।११।।

इमां नारायणः स्वप्ने शिवरक्षां यथादिशत् ।
प्रातरुत्थाय योगीन्द्रो याज्ञवल्क्यस्तथाऽलिखत् ।।१२।।

इति श्रीयाज्ञवल्क्यप्रोक्तमभयङ्करं शिवरक्षास्तोत्रं सम्पूर्णम् ।।

•

## शिवाष्टोत्तरशतनामस्तोत्रम्

शिवो महेश्वरः शम्भुः पिनाकी शशिशेखरः ।
वामदेवो विरूपाक्षः कपर्दी नीललोहितः ॥१॥
शंकरः शूलपाणिश्च खट्वांगी विष्णुवल्लभः ।
शिपिविष्टोऽम्बिकानाथः श्रीकंठो भक्तवत्सलः ॥२॥

भवः शर्वस्त्रिलोकेशः शितिकंठः शिवाप्रियः ।
उग्रः कपाली कामारिरंधकासुरसूदनः ॥३॥
गङ्गाधरो ललाटाक्षः कालकालः कृपानिधिः ।
भामः परशुहस्तश्च मृगपाणिर्जटाधरः ॥४॥
कैलासवासी कवची कठोरस्त्रिपुरांतकः ।
वृषांकी वृषभारूढो भस्मोद्धूलितविग्रहः ॥५॥

सामप्रियः स्वरमयस्त्रयीमूर्तिरनीश्वरः ।
सर्वज्ञः परमात्मा च सोमसूर्याग्निलोचनः ॥६॥
हविर्यज्ञमयः सोमः पंचवक्त्रः सदाशिवः ।
विश्वेश्वरो वीरभद्रो गणनाथः प्रजापतिः ॥७॥

हिरण्यरेता दुर्धर्षो गिरीशो गिरिशोऽनघः ।
भुजङ्गभूषणो भर्गो गिरिधन्वा गिरिप्रियः ॥८॥
कृत्तिवासाः पुरारातिर्भगवान् प्रमथाधिपः ।
मृत्युंजयः सूक्ष्मतनुर्जगद्व्यापी जगद्गुरुः ॥९॥
व्योमकेशो महासेनजनकश्चारुविक्रमः ।
रुद्रो भूतपतिः स्थाणुरहिर्बुध्न्यो दिगम्बरः ॥१०॥

अष्टमूर्तिरनेकात्मा सात्त्विकः शुद्धविग्रहः ।
शाश्वतः खंडपरशू रजःपाशविमोचनः ॥११॥
मृडः पशुपतिर्देवो महादेवोऽव्ययो हरिः ।
पूषदन्तभिदव्यग्रो दक्षाध्वरहरो हरः ॥१२॥

भगनेत्रभिदव्यक्तः सहस्राक्षः सहस्रपात् ।
अपवर्गप्रदोऽनन्तस्तारकः परमेश्वरः ॥१३॥

इति श्रीशिवाष्टोत्तरशतनामावलिस्तोत्रं संपूर्णम् ।

•

## शिवमहिमकलिकास्तुतिः

यत्सर्वक्रतुफलदं यदखिलयज्ञादिकामहितम् ।
यत्सकलदेवरूपं ज्योतिस्तदुपास्महे सोमम् ॥ १ ॥
अविरकास्सोमभवानखिलागमविनुतसकलमन्त्राङ्गः ।
ब्रह्माद्यास्तुगवादिवदमरास्सर्वे विकारास्ते ॥ २ ॥
सह वेदे पठ्यन्तां सहस्रमिष्ट्यादिवत्तया त्रिदश ।
न्यायविदो बुध्यन्ते तेषां सोमप्रधानं त्वाम् ॥ ३ ॥
सर्वेश्वर नामैव स्फुटयति सर्वाधिपत्यमीश तव ।
वाजिन इव सोमपदं स्तुत्यर्थं केवलं तदन्यत्र ॥ ४ ॥
नामेदं त्वयि शिखया ह्यन्यसुरत्यागहेतुपरमुदितम् ।
नह्यत्रेतिवदीश्वर हेतुपरं नाविविक्षतस्वार्थम् ॥ ५ ॥
त्वत्तः किल जायन्ते प्रतिकल्पं ब्रह्माविष्णुरुद्रेन्द्राः ।
तेष्वपकृष्टेषु विभो न स्युस्तदधस्तनाः किमपकृष्टाः ॥ ६ ॥
आवापोद्वापाभ्यां प्रतिकल्पं देवताः पृथक् कुर्वन् ।
दुरधिगमविविधशक्तिर्विहरसि देव प्रतीष्टि वेद इव ॥ ७ ॥
त्वच्छक्तिविलासेन स्वस्वपदे देवता इति प्रथिताः ।
यागा इव शब्दविधौ न स्वव्यापारतश्शिव त्रिदशाः ॥ ८ ॥
यदुपहतशक्ति कः किल पुरहर शक्नोति किमपि विधातुम् ।
मन्त्रस्थयजत्यादिवदमरगणः कस्ततस्त्वदधिकस्स्यात् ॥ ९ ॥
त्वच्छक्त्यधिष्ठितत्वात्परभावस्स्फुरति पद्मजाद्येषु ।
वेदाक्षरमिश्रत्वाद्वेदत्वं ननु विभाति कल्प्येषु ॥१०॥
त्वयि यागवत्प्रधाने स्थितेपि भगवन् धियैव संवेद्ये ।
स्थूलदृशां होमेष्विव गुणमूर्तिषु भासते प्रधानत्वम् ॥११॥
न परं गुणमूर्तिभ्यो विदन्ति दुर्दर्शरूपमबुधास्त्वाम् ।
हाविरन्तरालयुक्तं विधिमिव विष्ण्वादिवाक्येभ्यः ॥१२॥
ज्योतिर्मये त्वयि सति त्रिदशगणोहर्गण इवास्माकम् ।
नोपचयार्थमुपास्यश्शतोक्थ्यगानामिवोक्थ्यानाम् ॥१३॥
आश्रित्य हि लब्धपदा ज्योतिष्टोममिव सर्वफलदं त्वाम् ।
किञ्चित्किञ्चित्फलमिह संस्था इव देवताः प्रयच्छन्ति ॥१४॥
आकाङ्क्षितं लभन्तां सोम सुरास्त्वत्प्रदिष्टमखिलमपि ।
न गवादिवल्लभन्ते त्वद्देयफलप्रधानसामर्थ्यम् ॥१५॥

त्वामतियजेत भगवन् यदि कुलदैवतं द्विजातिकुरजातः ।
उभयभ्रष्टो नश्येदभ्युदयो पांशुयाजवज्जडः ॥१६॥
ब्रह्मकुले जातोऽपि त्वद्भजनं निजमपास्य यो विकृतः ।
न ब्राह्मणस्य भगवन्नहमन्त्रो मन्त्रमध्यगोव्यूहः ॥१७॥
ज्योतिष्टोममिव त्वां नित्यं यस्सर्गसद्भाव्यम् ।
अतिलंघ्येतरजनं कुरुते न ततोस्ति निरयभागन्यः ॥१८॥
अग्न्याद्या विष्ण्वन्तास्सर्वे देवाः परिग्राह्याः ।
सोम त्वामधिगन्तुं तपश्च नियमाश्च भूयांसः ॥१९॥
दीक्षाभिरभिसमेतो विपश्चिदखिलाङ्गजातगोचरया ।
सोम त्वद्भावनया दुःखमसंभिन्नसुखमुपैति पदम् ॥२०॥
तन्त्राण्यङ्गानि तव स्वामिन् दीक्षाप्रधानानि ।
तन्निष्ठः क्रमशस्त्वामहीनमुख्ये प्रसाधनमुपैति ॥२१॥
धर्मानुग्रहलाभाद् ब्राह्मणवर्गस्य वर्णसाम्याच्च ।
त्वद्धर्माः परमुचिता शिवाज्यधर्मा मधूदकस्सेवा ॥२२॥
अनृतादिदूषितोऽहं विना तव परिग्रहं विरूपाक्ष ।
तव धर्मे तत्परतां न लभेय विधेरिवार्थवादांशः ॥२३॥
अपराधनिरस्तमपि स्वीकुरु करुणानिधे पुनश्शिव माम् ।
विधितः प्रपद्यमानं हविरभ्युदयज्ञ दर्शवत्स्वामिन् ॥२४॥
नाथ तव महिमकलिकाककुभः श्रुत्यन्तपारिजातभवा ।
सुरभयतु करुणया तव मीमांसान्यायपरिमिलोल्लासैः ॥२५॥

इति श्रीमदप्पयदीक्षितविरचिता शिवमहिमकलिकास्तुतिः सम्पूर्णा ॥

•

## श्रीदक्षिणामूर्तिस्तोत्रम् (१)

उपासकानां यदुपासनीयमुपात्तवासं वटशाखिमूले ।
तद्धाम दाक्षिण्यजुषा स्वमूर्त्या जागर्तु चित्ते मम बोधरूपम् ॥१॥
अद्राक्षमक्षीणदयानिधानमाचार्यमाद्यं वटमूलभागे ।
मौनेन मन्दस्मितभूषितेन महर्षिलोकस्य तमो नुदन्तम् ॥२॥
विद्राविताशेषतमोगणेन मुद्राविशेषेण मुहुर्मुनीनाम् ।
निरस्य मायां दयया विधत्ते देवो महांस्तत्त्वमसीति बोधम् ॥३॥
अपारकारुण्यसुधातरङ्गैरपाङ्गपातैरवलोकयन्तम् ।
कठोरसंसारनिदाघतप्तान्मुनीनहं नौमि गुरुं गुरूणाम् ॥४॥

ममाद्यदेवो वटमूलवासी कृपाविशेषात्कृतसंनिधानः ।
ओंकाररूपामुपदिश्य विद्यामाविद्यकध्वान्तमपाकरोतु ॥५॥
कलाभिरिन्दोरिव कल्पिताङ्गं मुक्ताकलापैरिव बद्धमूर्तिम् ।
आलोकये देशिकमप्रमेयमनाद्यविद्यातिमिरप्रभातम् ॥६॥
स्वदक्षजानुस्थितवामपदं पादोदरालंकृतयोगपट्टम् ।
अपस्मृतेराहितपादमङ्गं प्रणौमि देवं प्रणिधानवन्तम् ॥७॥
तत्त्वार्थमन्तेवसतामृषीणां युवाऽपि यः सन्नुपदेष्टुमीष्टे ।
प्रणौमि तं प्राक्तनपुण्यजालैराचार्यमाश्चर्यगुणाधिवासम् ॥८॥
एकेन मुद्रां परशुं करेण करेण चान्येन मृगं दधानः ।
स्वजानुविन्यस्तकरः पुरस्तादाचार्यचूडामणिराविरस्तु ॥९॥
आलेपवन्तं मदनाङ्गभूत्या शार्दूलकृत्त्या परिधानवन्तम् ।
आलोकये कञ्चन देशिकेन्द्रमज्ञानवाराकरवाडवाग्निम् ॥१०॥
चारुस्मितं सोमकलावतंसं वीणाधरं व्यक्तजटाकलापम् ।
उपासते केचन योगिनस्त्वामुपात्तनादानुभवप्रमोदम् ॥११॥
उपासते यं मुनयः शुकाद्या निराशिषो निर्ममताधिवासाः ।
तं दक्षिणामूर्तितनुं महेशमुपास्महे मोहमहार्तिशान्त्यै ॥१२॥
कान्त्या निन्दितकुन्दकन्दलवपुर्न्यग्रोधमूले वसत्
कारुण्यामृतवारिभिर्मुनिजनं संभावयन्वीक्षितैः ।
मोहध्वान्तविभेदन विरचयन्बोधेन तत्तादृशा
देवस्तत्त्वमसीति बोधयतु मां मुद्रावता पाणिना ॥१३॥
अगौरगात्रैरललाटनेत्रैरशान्तवेषैरभुजङ्गभूषैः ।
अबोधमुद्रैरनपास्तनिद्रैरपूर्णकामैरमरैरलं नः ॥१४॥
दैवतानि कति सन्ति चावनौ नैव तानि मनसो मतानि मे ।
दीक्षितं जडधियामनुग्रहे दक्षिणाभिमुखमेव दैवतम् ॥१५॥
मुदिताय मुग्धशशिनावतंसिने भसितावलेपरमणीयमूर्तये ।
जगदिन्द्रजालरचनापटीयसे महसे नमोऽस्तु वटमूलवासिने ॥१६॥
व्यालम्बिनीभिः परितो जटाभिः कलावशेषेण कलाधरेण ।
पश्यल्ललाटेन मुखेन्दुना च प्रकाशसे चेतसि निर्मलानाम् ॥१७॥
उपासकानां त्वमुमासहायः पूर्णेन्दुभावं प्रकटीकरोषि ।
यदद्य ते दर्शनमात्रतो मे द्रवत्यहो मानसचन्द्रकान्तः ॥१८॥
यस्ते प्रसन्नामनुसन्दधानो मूर्तिं मुदा मुग्धशशाङ्कमौलेः ।
ऐश्वर्यमायुर्लभते च विद्यामन्ते च वेदान्तमहारहस्यम् ॥१९॥

॥ इति श्रीदक्षिणामूर्तिस्तोत्रम् ॥

## श्रीदक्षिणामूर्तिस्तोत्रम् (२)

विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया ।
यः साक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥१॥

बीजस्यान्तरिवांकुरो जगदिदं प्राङ्निर्विकल्पं पुन-
र्मायाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतम् ।
मायावीव विजृम्भयत्यपि महायोगीव यः स्वेच्छया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥२॥

यस्यैव स्फुरणं सदात्मकमसत्कल्पार्थकं भासते
साक्षात्तत्त्वमसीति वेदवचसा यो बोधयत्याश्रितान् ।
यत्साक्षात्करणाद्भवेन्न पुनरावृत्तिर्भवांभोनिधौ
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥३॥

नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं
ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते ।
जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥४॥

देहं प्राणमपीन्द्रियाण्यपि चलां बुद्धिं च शून्यं विदुः
स्त्रीबालान्धजडोपमास्त्वहमिति भ्रान्ता भृशं वादिनः ।
मायाशक्तिविलासकल्पितमहाव्यामोहसंहारिणे
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥५॥

राहुग्रस्तदिवाकरेन्दुसदृशो मायासमाच्छादनात्
सन्मात्रः करणोपसंहरणतो योऽभूत्सुषुप्तः पुमान् ।
प्रागस्वाप्समिति प्रबोधसमये यः प्रत्यभिज्ञायते
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥६॥

बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि
व्यावृत्तास्वनुवर्तमानमहमित्यन्तः स्फुरन्तं सदा ।
स्वात्मानं प्रकटीकरोति भजतां यो भद्रया मुद्रया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥७॥

विश्वं पश्यति कार्यकारणतया स्वस्वामिसम्बन्धतः
शिष्याचार्यतया तथैव पितृपुत्राद्यात्मना भेदतः ।
स्वप्ने जाग्रति वा य एष पुरुषो मायापरिभ्रामित-
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥८॥

भूरंभांस्यनलोऽनिलोऽम्बरमहर्नाथो हिमांशुः पुमा-
नित्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम् ।
नान्यत् किंचन विद्यते विमृशतां यस्मात्परस्माद्विभो-
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥९॥

सर्वात्मत्वमिति स्फुटीकृतमिदं यस्मादमुष्मिन् स्तवे
तेनास्य श्रवणात्तथार्थमननाद्ध्यानाच्च संकीर्तनात् ।
सर्वात्मत्वमहाविभूतिसहितं स्यादीश्वरत्वं स्वतः
सिद्धेत्तत्पुनरष्टधा परिणतं चैश्वर्यमव्याहतम् ॥१०॥

॥ इति श्रीमच्छङ्करभगवत्पादकृतं श्रीदक्षिणामूर्तिस्तोत्रम् ॥

## गंगाधरस्तोत्रम्

क्षीराम्भोनिधिमन्थनोद्भवविषात्संदह्यमानान् सुरान्
ब्रह्मादीनवलोक्य यः करुणया हालाहलाख्यं विषम् ।
निश्शङ्कं निजलीलया कवलयन्लोकान्ररक्षादरा-
दार्तत्राणपरायणस्स भगवान् गंगाधरो मे गतिः ॥१॥
क्षीरं स्वादु निपीय मातुलगृहे मुक्त्वा स्वकीयं गृहं
क्षीरालाभवशेन खिन्नमनसे घोरं तपः कुर्वते ।
कारुण्यादुपमन्यवे निरवधिं क्षीरांबुधिं दत्तवा-
नार्तत्राणपरायणस्स भगवान् गंगाधरो मे गतिः ॥२॥
मृत्युं वक्षसि ताडयन्निजपदध्यानैकभक्तं मुनिं
मार्कण्डेयमपालयत्करुणया लिङ्गाद्विनिर्गत्य यः ।
नेत्राम्भोजसमर्पणेन हरयेऽभीष्टं रथाङ्गं ददा-
वार्तत्राणपरायणस्स भगवान् गंगाधरो मे गतिः ॥३॥
ओढुं द्रोणजयद्रथादिरथिकैरसैस्न्यं महत्कौरवं
दृष्ट्वा कृष्णसहायवंतमपि तं भीतं प्रपन्नार्तिहा ।
पार्थं रक्षितवानमोघविषयं दिव्यास्त्रमुद्बोधय-
न्नार्तत्राणपरायणस्स भगवान् गंगाधरो मे गतिः ॥४॥

बालं शैवकुलोद्भवं परिहसत्स्वज्ञातिपक्षाकुलं
खिद्यंतं तव मूर्ध्नि पुष्पनिचयं दातुं समुद्यत्करम् ।
दृष्ट्वानम्य विरिञ्चिरम्यनगरे पूजां त्वदीयां मज-
न्नार्तत्राणपरायणस्स भगवान् गंगाधरो मे गति ॥५॥

संत्रस्तेषु पुरा सुरासुरभयादिन्द्रादिवृंदारकेऽ
श्वारूढो धरणीरथं श्रुतिहयं कृत्वा मुरारिं शरम् ।
रक्षन्यः कृपया समस्तविबुधान् जित्वा पुरारीन् क्षणा-
दार्तत्राणपरायणस्स भगवान् गंगाधरो मे गतिः ॥६॥

श्रौतस्मार्तपथो पराङ्मुखमपि प्रोद्यन्महापातकं
विश्वाधीशमपत्यमेव गतिरित्यालापवन्तं सकृत् ।
रक्षन् यः करुणापयोनिधिरिति प्राप्तप्रसिद्धिः पुरा
ह्यार्तत्राणपरायणस्स भगवान् गंगाधरो मे गतिः ॥७॥

गांगं वेगमवाप्य मान्यविबुधैस्सोढुं पुरा याचितो
दृष्ट्वा भक्तभगीरथेन विनतो रुद्रो जटामण्डले ।
कारुण्यादवनीतले सुरनदीमापूरयन्पावनी-
मार्तत्राणपरायणस्स भगवान् गङ्गाधरो मे गतिः ॥८॥

इति श्रीमदप्पयदीक्षितविरचितं गङ्गाधरस्तोत्रं सम्पूर्णम् ॥

•

## दक्षिणामूर्तिनवरत्नमालास्तोत्रम्

मूले वटस्य मुनिपुङ्गवसेव्यमानं मुद्राविशेषमुकुलीकृतपाणिपद्मम् ।
मन्दस्मितं मधुरवेषमुदारमाद्यं तेजस्तदस्तु हृदि मे तरुणेन्दुचूडम् ॥१॥

शान्तं शारदचन्द्रकान्तिधवलं चन्द्राभिरामाननं
चन्द्रार्कोपमकान्तिकुण्डलधरं चन्द्रावदातांशुकम् ।
वीणापुस्तकजक्षसूत्रवलयव्याख्यानमुद्रां करै-
र्बिभ्राणं कलये हृदा मम सदा शास्तारमिष्टार्थदम् ॥२॥

कर्पूरगात्रमरविन्ददलायताक्षं कर्पूरशीतलहृदं करुणाविलासम् ।
चन्द्रार्धशेखरमनन्तगुणाभिराममिन्द्रादिसेव्यपदपङ्कजमीशमीडे ॥३॥

द्युद्रोरथस्थस्वर्णमयासनस्थं मुद्रोल्लसद्बाहुमुदारकायम् ।
सद्रोहिणीनाथकलावतंसं भद्रोदधिं कञ्चन चिन्तयामः ॥४॥

उद्यद्भास्करसन्निभं त्रिनयनं श्वेताङ्गरागप्रभं
बालं मौञ्जिधरं प्रसन्नवदनं न्यग्रोधमूले स्थितम् ।
पिङ्गाक्षं मृगशावकस्थितिकरं सुब्रह्मसूत्राकृतिं
भक्तानामभयप्रदं भयहरं श्रीदक्षिणामूर्तिकम् ॥५॥
श्रीकान्तद्रुहिणोपमन्युतपनस्कन्देन्द्रनन्द्यादयः
प्राचीना गुरवोपि यस्य करुणालेशाद्गता गौरवम् ।
तं सर्वादिगुरुं मनोज्ञवपुषं मन्दस्मितालंकृत
चिन्मुद्राकृतिमुग्धपाणिनलिनं चित्ते शिवं कुर्महे ॥६॥
कपर्दिनं चन्द्रकलावतंसं त्रिनेत्रमिन्दुं प्रतिमक्षिताज्ज्वलम् ।
चतुर्भुजं ज्ञानदमक्षसूत्रपुस्ताग्निहस्तं हृदि भावयेच्छिवम् ॥७॥
वामोरूपरिसंस्थितां गिरिसुतामन्योन्यमालिङ्गितां
श्यामामुत्पलधारिणीं शशिनिमां चालोकयन्तं शिवम् ।
आश्लिष्टेन करेण पुस्तकमथो कुम्भं सुधापूरितं
मुद्रां ज्ञानमयी दधानमपरैर्मुक्ताक्षमालं भजे ॥८॥
वटतरुनिकटवासं पटुतरविज्ञानमुद्रितकराब्जम् ।
कञ्चन देशिकमाद्यं कैवल्यानन्दकन्दलं वन्दे ॥९॥

इति श्रीदक्षिणामूर्तिनवरत्नमालास्तोत्रं सम्पूर्णम् ।

•

## नटेशपञ्चरत्नम्

श्रीमच्चिदम्बरनटाद् नटराजराजाद् विद्याधिपाद् विविधमङ्गलदानशौण्डात् ।
पूर्णेन्दुसुन्दरमुखाद् द्विजराजचूडाद् भर्गात्परं किमपि तत्त्वमहं न जाने ॥१॥
ढक्काविभूषितकराद् विषनीलकण्ठात् फुल्लारविन्दनयनात् फणिराजवन्द्यात् ।
व्याघ्राङ्घ्रिपूज्यचरणाच्छिवकुञ्चिताङ्घ्रेः शम्भोः परं किमपि तत्त्वमहं न जाने ॥
श्रीनाथमृग्यचरणाद् विधिमृग्यचूडात् श्रीपुण्डरीकनिलयात् श्रितदुःखनाशात् ।
श्रीमद्गुहस्य जनकात् सुखवृत्तराजात् श्रीशात् परं किमपि तत्त्वमहं न जाने ॥३॥
श्रीमद्गणेशजनकाद् मखिवृन्दपूज्यात् तिल्लीटवीसुनिलयात् त्रिपुराम्बिकेशात् ।
व्याघ्राजिनाम्बरधराद् उरुरोगनाशाद् रुद्रात् परं किमपि तत्त्वमहं न जाने ॥४॥
श्रीमद्व्याघ्रपुरेश्वरात् फणिराजभूषात् संसाररोगभिषजो निखिलाण्डपालात् ।
श्रीमद्धेमसभेश्वरात् ललिताम्बिकेशात् स्थाणोः परं किमपि तत्त्वमहं न जाने ॥५॥
पञ्चरत्नं नटेशस्य सोमशेखरयज्वभिः ।
संस्तुतं यः पठेन्नित्यं शाश्वतं तस्य मङ्गलम् ॥६॥
॥ इति नटेशपञ्चरत्नं संपूर्णम् ॥

# शिवाथर्वशीर्षम्

ॐ देवा ह वै स्वर्गलोकमयंस्ते रुद्रमपृच्छन् । को भवानिति । सोऽब्रवीदहमेकः प्रथममासोद्वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति । सोऽन्तरादन्तरं प्राविशद्दिशश्चान्तरं प्राविशत्सोऽहं नित्यानित्यो व्यक्ताव्यक्तो ब्रह्माब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षिणाञ्च उदञ्चोऽहमधश्चोर्ध्वश्चाहं दिशश्चप्रतिदिशश्चाहं पुमान् स्त्रियश्चाहं सावित्र्यहं गायत्र्यहं त्रिष्टुब्जगत्यनुष्चाहं छंदोऽहं सत्योऽहं गार्हपत्योदक्षिणाग्निराहवनीयोऽहं गौरहं गौर्यहमृगहं यजुरहं सामाहमथर्वाङ्गिरसोऽहं जेष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोऽहमापोऽहं तेजोऽहं गुह्योऽहमरण्योऽहमक्षरमहं क्षरमहं पुष्करमहं पवित्रमहमुग्रञ्च बलिश्च पुरस्ताज्ज्योतिरित्यहमेव सर्वेभ्यो मामेव स सर्वः समायो मां वेद स देवान् वेद सर्वांश्च वेदान् साङ्गानपि ब्रह्मब्रह्माणैश्च गांगोभिर्ब्राह्मिणेन हविर्हविषा आयुरायुषा सत्यं सत्येन धर्मेण धर्मं तर्पयामि स्वेन तेजसा । ततो ह वै ते देवा रुद्रमपृच्छन् । ते देवा रुद्रमपश्यन् ते देवा रुद्रमध्यायन् दे देवा ऊर्ध्वबाहवो रुद्रं स्तुवन्ति ॐ यो वै रुद्रः स भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः ॥१॥ यो वै रुद्रः स भगवान् यश्चविष्णुस्तस्मै वै नमो नमः ॥२॥ यो वै रुद्रः स भगवान् यश्च स्कंदस्तस्मै० ॥३॥ यो वै रुद्रः स भगवान् यश्चेन्द्रस्तस्मै० ॥४॥ यो वै रुद्रः स भगवान्यश्चाग्निस्तस्मै० ॥५॥ यो वै रुद्रः स भगवान् यश्च वायुस्तस्मै० ॥६॥ ॐ यो वै रुद्रः स भगवान् यश्चसूर्यस्तस्मै० ॥७॥ यो वै रुद्रः स भगवान् यश्च सोमस्तस्मै० ॥८॥ यो वै रुद्रः स भगवान् येऽष्टौ ग्रहास्तस्मै० ॥९॥ यो वै रुद्रः स भगवान् येचाष्टौ प्रतिग्रहास्तस्मै० ॥१०॥ यो वै रुद्रः स भगवान् यच्च भूस्तस्मै० ॥११॥ यो वै रुद्रः सः भगवान् यच्च भुवस्तस्मै० ॥१२॥ यो वै रुद्रः स भगवान् यच्च स्वस्तस्मै० ॥१३॥ यो वै रुद्रः स भगवान् यच्च महस्तस्मै० ॥१४॥ यो वै रुद्रः स भगवान् या च पृथिवी तस्मै० ॥१५॥ यो वै रुद्रः स भगवान् यच्चान्तरिक्षं तस्मै० ॥१६॥ यो वै रुद्रः स भगवान् या च द्यौस्तस्मै० ॥१७॥ यो वै रुद्रः स भगवान् यश्चापस्तस्मै० ॥१८॥ यो वै रुद्रः स भगवान् यच्च तेजस्तस्मै० ॥१९॥ यो वै रुद्रः स भगवान् यश्च कालस्तस्मै० ॥२०॥ यो वै रुद्रः स भगवान् यश्च यमस्तस्मै० ॥२१॥ यो वै रुद्रः स भगवान् यश्चमृत्युस्तस्मै० ॥२२॥ यो वै रुद्रः स भगवान् यच्चामृतं तस्मै० ॥२३॥ यो वै रुद्रः स भगवान् यच्चाकाशं तस्मै० ॥२४॥ यो वै रुद्रः स भगवान् यच्च विश्वं तस्मै०॥२५॥ यो वै रुद्रः स भगवान् यच्च स्थूलं तस्मै० ॥२६॥ यो वै रुद्रः स भगवान् यच्च सूक्ष्मं तस्मै ॥२७॥ यो वै रुद्रः स भगवान् यच्च शुक्लं तस्मै० ॥२८॥ यो वै रुद्रः स भगवान् यच्च कृष्णस्तस्मै० ॥२९॥ यो वै रुद्रः स भगवान्

यच्च कृत्स्नं तस्मै० ॥३०॥ यो वै रुद्रः स भगवान् यच्च सत्यं तस्मै० ॥३१॥ ॥१॥ यो वै रुद्रः स भगवान् यच्च सर्वं तस्मै० ॥३२॥ भूस्ते आदिर्मध्यभुवस्ते स्वस्ते शीर्षं विश्वरूपोऽसि ब्रह्मैकस्त्वं द्विधात्रिधावृद्धिस्त्वं शांतिस्त्वं पुष्टिस्त्वं हुतमहुतं दत्तमदत्तं सर्वमसर्वं विश्वमविश्वं कृतमकृतं परमपरं परायणञ्च त्वं अपामसोमममृता अंभूमागन्मे ज्योतिरविदाम देवान्। किं नूनमस्मान् कृणवदरातिः। किमुधूर्तिरमृतं मर्त्यस्य सोमसूर्यसूर्यपुरस्तात्सूक्ष्मः पुरुषः। सर्वञ्जगद्धितं वा एतदक्षरं प्राजापत्यं सोम्यं सूक्ष्मं पुरुषं ग्राह्यमग्राह्येण भावं भावेन सौम्यं सौम्येन सूक्ष्मं सूक्ष्मेण वायव्यं वायव्येन ग्रसति तस्मै महाग्रासाय वै नमो नमः ॥२॥ हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः। हृदि त्वमसि यो नित्यं तिस्रो मात्राः परस्तुसः। तस्योत्तरतः शिरो दक्षिणतः पादो य उत्तरतः स ओङ्कारः य ओङ्कारः स प्रणवः यः प्रणवः स सर्वव्यापी यः सर्वव्यापी सोऽनन्तः योऽनन्तस्तत्तारं यत्तारं तच्छुक्लं यच्छुक्लं तत्सूक्ष्मं यत्सूक्ष्मं तद्वैद्युतं तत्परं ब्रह्म। यत् परं ब्रह्म स एकः य एकः स रुद्रः यो रुद्रः स ईशानः य ईशानः स भगवान् महेश्वरः ॥३॥ अथ कस्मादुच्यते ओङ्कारः यस्मादुच्चार्यमाण एव प्राणानूर्ध्वमुत्क्रामयति तस्मादुच्यते ओङ्कारः। अथ कस्मादुच्यते प्रणवः। यस्मादुच्चार्यमाण एव ऋग्यजुःसामाथर्वाङ्गिरस ब्रह्मब्राह्मणेभ्यः प्रणामयति नामयति च तस्मादुच्यते प्रणवः। अथ कस्मादुच्यते सर्वव्यापी यस्मादुच्चार्यमाण एव यथास्नेहेन पलालपिण्डमिव शान्तरूपमोतप्रोतमनुप्राप्तोव्यतिषक्तश्च तस्मादुच्यते सर्वव्यापी। अथ कस्मादुच्यतेऽनन्तः यस्मादुच्चार्यमाण एव तिर्यगूर्ध्वमधस्ताच्चास्यान्तो नोपलभ्यते तस्मादुच्यतेऽनन्तः। अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भजन्मव्याधिजरामरणसंसारमहाभयात्तारयति त्रायते च तस्मादुच्यते तारम्। अथ कस्मादुच्यते शुक्लं यस्मादुच्चार्यमाण एव क्रंदते क्लामयति तस्मादुच्यते शुक्लम्। अथ कस्मादुच्यते सूक्ष्मं यस्मादुच्चार्यमाण एव सूक्ष्मो भूत्वा शरीराण्यधितिष्ठति सर्वाणि चाङ्गान्यभिमृश्यति तस्मादुच्यते सूक्ष्मम्। अथकस्मादुच्यते वैद्युतं यस्मादुच्चार्यमाण एव व्यक्ते महति तपसि द्योतयति तस्मादुच्यते वैद्युतम्। अथ कस्मादुच्यते परं ब्रह्म यस्मात्परमपरं परायणञ्च बृहद्बृहत्या बृंहयति तस्मादुच्यते परं ब्रह्म। अथ कस्मादुच्यते एकः यः सर्वान्प्राणान् संभक्ष्य संभक्षणेनाजः संसृजति विसृजति तीर्थमेके व्रजन्ति तीर्थमेके दक्षिणः प्रत्यञ्च उदञ्च प्राच्योऽभिव्रजन्त्येके तेषां सर्वेषामिह सङ्गतिः साकं स एकोऽभूदन्तश्चरति प्रजानां तस्मादुच्यते एकः। अथ कस्मादुच्यते रुद्रः यस्मादृषिभिर्नान्यैर्भक्तैर्द्रुतमस्यरूपमुपलभ्यते तस्मादुच्यते रुद्रः। अथ कस्मादुच्यते ईशानः यः सर्वान्देवानीशते ईशानीभिर्जनीभिश्च शक्तिभिः। अभित्वा शूरणोनुमोदुग्धा इव धेनव ईशानमस्य जगतः स्वदर्शमीशानमिन्द्र तस्थुष इति तस्मादुच्यते ईशानः। अथ कस्मादुच्यते भगवान्

महेश्वरः यस्माद्भक्तान् ज्ञानेन भजत्यनुगृह्णाति च वाचं संसृजति स सर्वान् भवान् परित्यज्यात्मज्ञानेन योगैश्वर्येण महति महीयते तस्मादुच्यते स भगवान् महेश्वरः तदेतद्रुद्रचरितम् ॥४॥ एषो ह देवः प्रदिशोऽनुसर्वाः पूर्वो ह जातः स उ गर्भे अन्तः। स एव जातः स जनिष्यमाण प्रत्यङ् जनांस्तिष्ठति सर्वतोमुखः। एको रुद्रो न द्वितीयाय तस्मै य इमाँल्लोकानीशत ईशानीभिः। प्रत्यङ् जनास्तिष्ठति चान्तकाले संसृज्य विश्वाभुवनानि गोप्ता ॥ यो योनिं योनिमधितिष्ठत्येको येनेदं सर्वं विचरति सर्वम् तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति। क्षमां हित्वा हेतुजालस्य मूलं बुद्धया संचितं स्थापयित्वा तु रुद्रे। रुद्रमेकत्वमाहुः शाश्वतं वै पुराणमिषमूर्जेण पशवो नानुमायन्तम्मृत्युपाशान्। तदेतेनात्मन्नेते-नार्धचतुर्थेन मात्रेण शान्तिं संसृजति। पशुपाशविमोक्षणं या सा प्रथमा मात्रा ब्रह्मदेवत्या रक्ता वर्णेन यस्तां ध्यायते नित्यं स गच्छेत् ब्रह्मपदम्। या सा द्वितीया मात्रा विष्णुदेवत्या कृष्णावर्णेन यस्तां ध्यायते नित्यं स गच्छेद्वैष्णवं पदम्। या सा तृतीया मात्रा ईशानदेवत्या कपिला वर्णेन यस्तां ध्यायते नित्यं सगच्छेदीशानं पदम्। या सार्धचतुर्थी मात्रा सर्वदेवत्याऽव्यक्तीभूता खं विचरति शुद्धा स्फटिक-सन्निभा वर्णेन यस्तां ध्यायते नित्यं स गच्छेत्पदमनामयम्। तदेतदुपासीत मुनयो वाग्वदन्ति न तस्य ग्रहणमयं पंथाविहित उत्तरेण येन देवा यान्ति येन पितरो येन ऋषयः परमपरं परायणं चेति। बालाग्रमात्रं हृदयस्य मध्ये विश्वेदेवं जातरूपं वरेण्यम्। तमात्मस्थं ये तु पश्यन्ति धीरास्तेषां शान्तिर्भवति नोत्तरेषाम्। यस्मिन् क्रोधं याञ्च तृष्णां क्षमाञ्चाक्षमां हित्वा हेतुजालस्य मूलं बुद्धया सञ्चितं स्थापयित्वा तु रुद्रे रुद्रमेकत्वमाहुः रुद्रो हिं शाश्वतेन वै पुराणेनेषमूर्जेण तपसा नियन्ताग्नि-रिति भस्म वायुरिति भस्म जलमिति भस्म सर्वं ह वा इदं भस्म मन एतानि चक्षूंषि यस्माद्व्रतमिदं पाशुपतं यद्भस्मनाङ्गानि संस्पृशेत् तस्माद्ब्रह्म तदेतत्पाशु-पतं पशुपाशविमोक्षणाय ॥५॥ योऽग्नौ रुद्रो योऽश्वन्तर्य ओषधीर्विरुधत्र्याविवेशा य इमा विश्वा भुवनानि च क्लृपे तस्मै रुद्राय नमोऽस्त्वग्नये। यो रुद्रोऽप्सु यो रुद्रोऽग्नौ यो रुद्रोऽश्वन्तर्यो रुद्र ओषधीर्विरुध आविवेश यो रुद्र इमाविश्वाभुवनानि च क्लृपे तस्मै रुद्राय वै नमोनमः। यो रुद्रोऽप्सु यो रुद्रा ओषधीषु यो रुद्रो वनस्पतिषु येन रुद्रेण जगदूर्ध्वं धारितं पृथिवी द्विधा त्रिधा धर्त्ता धारिता नागा येऽन्तरिक्षे तस्मै रुद्राय वै नमः। मूर्धानमस्य संसेव्याप्यथर्वा हृदयञ्च यत् ॥ मस्तिष्कादूर्ध्वं प्रेरयत्य-वमानोऽधिशीर्षतः। तद्वा अथर्वणः शिरो देवकोशः समुज्झितः तत् प्राणोऽभिरक्षति शिरोऽन्तमथो मनः। न च दिवो देवजने गुप्ता नचान्तरिक्षाणि न च भूम इमाः। यस्मिन्निदं सर्वमोतप्रोतं तस्मादन्यन्नपरं किञ्चनास्ति। न तस्मात्पूर्वं न परं तदस्ति न भूतं नोत भव्यं यदासीत्। सहस्रपादेन मूर्ध्ना व्याप्तं स एवेदमावरी-वर्तिभूतम्। अक्षरात् सञ्जायते कालः कालाद्व्यापक उच्यते। व्यापको हि

भगवान् रुद्रो भोगायमानो यदाशेते रुद्रस्तदा संहार्यते प्रजाः उच्छ्वसिते तमो भवति तमस आपोऽश्वङ्गुल्यामथिते मथितं शिशिरे शिशिरं मथ्यमानं फेनं भवति फेनादण्डं भवत्यण्डाद् ब्रह्मा भवति ब्रह्मणो वायुः वायोरोङ्कार ओङ्कारात्सावित्री सावित्र्या गायत्री गायत्र्या लोका भवन्ति अर्चयन्ति तपः सत्यं मधुरक्षन्ति यद् ध्रुवम् । एतद्धि परमं तपः अपोज्योतीरसोमृतं ब्रह्म भूर्भुवः स्वरोन्नम इति ॥६॥ य इदमथर्वशिरो ब्राह्मणोऽधीते । अश्रोत्रियः श्रोत्रियो भवति । अनुपनीत उपनीतो भवति । सोऽग्निपूतो भवति । स वायुपूतो भवति । स सूर्यपूतो भवति । स सोमपूतो भवति । स सत्यपूतो भवति । स सर्वैर्देवैर्ज्ञातो भवति । स सर्वैर्वेदैरनुध्यातो भवति । स सर्वेषु तीर्थेषु स्नातो भवति । तेन सर्वैः क्रतुभिरिष्टं भवति । गायत्र्याः षष्टिसहस्राणि जप्तानि भवन्ति । प्रणवानामयुतं जप्तं भवति । स चक्षुषः पंक्ति पुनाति आसप्तमात् पुरुषयुगान्पुनातीत्याह भगवानथर्वशिरः सकृज्जप्त्वैव शुचिः स पूतः कर्मण्यो भवति । द्वितीयं जप्त्वा गणाधिपत्यमाप्नोति । तृतीयं जप्त्वैवमेवानुप्रविशन्त्यों सत्यमों सत्यमों सत्यम् ।

॥ इत्यथर्ववेदे शिवाथर्वशीर्षम् ॥

•

## साम्बस्तुतिः

साम्बो नः कुलदैवतं पशुपते साम्ब त्वदीया वयं
साम्बं स्तौमि सुरासुरोरगगणाः साम्बेन संतारिताः ।
साम्बायास्तु नमो मया विरचितं साम्बात्परं नो भजे
साम्बस्यानुचरोऽस्म्यहं मम रतिः साम्बे परब्रह्मणि ॥१॥

विष्ण्वाद्याश्च पुरत्रयं सुरगणा जेतुं न शक्ताः स्वयं
यं शम्भुं भगवन्वयं तु पशवोऽस्माकं त्वमेवेश्वरः ।
स्वस्वस्थाननियोजिताः सुमनसः स्वस्था बभूवुस्तत-
स्तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥२॥

क्षोणी यस्य रथे रथाङ्गयुगलं चन्द्रार्कबिम्बद्वयं
कोदण्डः कनकाचलो हरिरभूद्बाणो विधिः सारथिः ।
तूणीरो जलधिर्हयाः श्रुतिचयो मौर्वी भुजंगाधिप-
स्तस्मिन्मे हृदयं० ॥३॥

येनापादितमङ्गजाङ्गभसितं दिव्याङ्गरागैः समं
येन स्वीकृतमब्जसम्भवशिरः सौवर्णपात्रैः समम् ।
येनाङ्गीकृतमच्युतस्य नयनं पूजारविन्दैः समं
तस्मिन्मे हृदयं० ॥४॥

गोविन्दादधिकं न दैवतमिति प्रोच्चार्य हस्तावुभा-
वृद्धृत्याथ शिवस्य संनिधिगतो व्यासो मुनीनां वरः ।
यस्य स्तम्भितपाणिरानतिकृता नन्दीश्वरेणाभव-
त्तस्मिन्मे हृदयं० ॥५॥

आकाशश्चिकुरायते दशदिशाभोगो दुकूलायते
शीतांशुः प्रसवायते स्थिततरानन्दः स्वरूपायते ।
वेदान्तो निलयायते सुविनयो यस्य स्वभावायते
तस्मिन्मे हृदयं० ॥६॥

विष्णुर्यस्य सहस्रनामनियमादम्भोरुहाण्यर्चय-
न्नेकोमोपचितेषु नेत्रकमलं नैजं पदाब्जद्वये ।
संपूज्यासुरसंहतिं विदलयंस्त्रैलोक्यपालोऽभव-
त्तस्मिन्मे हृदयं० ॥७॥

शौरिं सत्यगिरं वराहवपुषं पादाम्बुजादर्शने
चक्रे यो दयया समस्त जगतां नाथं शिरोदर्शने ।
मिथ्यावाचमपूज्यमेव सततं हंसस्वरूपं विधिं
तस्मिन्मे हृदयं० ॥८॥

यस्यासन्धरणीजलाग्निपवनव्योमार्कचन्द्रादयो
विख्यातास्तनवोऽष्टधा परिणता नान्यत्ततो वर्तते ।
ओंकारार्थविवेचिनी श्रुतिरियं चाचष्ट तुर्यं शिवं
तस्मिन्मे हृदयं० ॥९॥

विष्णुब्रह्मसुराधिपप्रभृतयः सर्वेऽपि देवा यदा
संभूताज्जलधेर्विषात्परिभवं प्राप्तास्तदा सत्वरम् ।
तानार्ताञ्शरणागतानिति सुरान्योऽरक्षदर्धक्षणा-
त्तस्मिन्मे हृदयं० ॥१०॥

इति श्रीमच्छंकरभगवतः कृतौ दशश्लोकीस्तुतिः सम्पूर्णा ॥

●

## मानसोल्लासः

अयि भ्रातश्चेतः परममुपदेशं शृणु मम
स्मरारेरर्चायां पटुषु करणेषु स्मर फलम् ।
तवैषां प्रेष्याणामुपरतिकृति श्रान्तिमहति
त्वयैकेन श्वासप्रशमसमये किं नु सुकरम् ॥१॥

अति स्थेमस्फीतानपि शिखरिणः पश्य चलितान्
कियन्तं वा कालं किसलयमृदु स्थास्यति वपुः ।
असारेऽस्मिन् पूजामयि हृदय शम्भोर्न कुरुषे
कदेदृक्ते लभ्यं कथय जडतन्त्रोपकरणम् ॥२॥

इदं सज्जीभूतं कृतमिदमिदं कार्यमधुने-
त्ययं व्यर्थारम्भस्तव बत मनः शाम्यति कदा ।
स खल्वागन्ता ते शिवभजनहीनस्य समयः
समुद्यन्निर्घोषज्ज्वलदशनिपातप्रतिभयः ॥३॥

इदानीमत्यल्पेष्वपि हृदयकायेष्वतिमहा-
नियान् व्यासङ्गस्ते न कलयसि येन स्मररिपुम् ।
अतिक्रन्दद्बन्धुव्यसनजलधावार्तिसमये
कियानागन्ता ते शिव शिव हतोऽस्म्येव भवता ॥४॥

अये चेतः शास्त्राण्यधिकमवगाढान्यपि मुधा
न यद्व्यासज्ज्येथाः पशुपतिपदाम्भोजयुगले ।
तदित्थं भोक्तव्यं खलु पुनरपि प्रेत्य भवता
महद्दुःखं वर्णग्रहणसमयोपक्रममिदम् ॥५॥

कियन्तो नाभूवन् हृदय परमप्रेमविषया
पुराजन्मस्वद्य क्व कथमिति जानासि किमु तान् ।
वृथा मोहं बन्धुष्वहितपरिणामं त्यज सखे
यदासङ्गाद् दोषात् स्मरसि न कदापि स्मररिपुम् ॥६॥

अमी चेत्पुत्राद्यास्तव भृशतरप्रेमविषया
भविष्यन्तो न स्युः किमु जड तथा भाविजनने ।
सदैव त्वय्येवं समुपचितरागे गतभये
कदा शम्भोश्चिन्ता भवति भवभीतिप्रशमनी ॥७॥

अनापृच्छ्य ज्ञातीननिशरुदितोच्छूननयनान्
गतिः का नस्तातेत्यतिकरुणमग्रे विलुठितान् ।
अवश्यं गन्तव्यं खलु तदहितानामपि पुर-
स्तदद्यैव स्नेहं त्यज हृदय तेष्वर्च गिरिशम् ॥८॥

त्वया गर्भे मातुर्यदिह चरितं चिन्तितमभूत्
तदालोच्य स्वान्त व्रज शिवमकार्ये त्यज रुचिम् ।
गतो नाशं मूर्खः क इव खलु वित्तार्जनधिया
महोदारं त्यक्त्वा प्रभुवरमृणादानरसिकः ॥९॥

अपथ्यादाहारादपि तव कियन्मानस भयं
मुहूर्तावस्थायिज्वरजठरभारादिकरणात् ।
अमुष्मादश्रान्तप्रविततभदव्याधिजननाद्
महेशे वैमुख्यात् किमिति न भयं किंचिदपि ते ॥१०॥

इयन्तं कालं ते नियतसहवासेन जनिता
किमीषन्नास्त्यन्तःकरण मयि सौहार्दकणिका ।
यथेच्छं भ्रान्तस्त्वं विहर विषयारण्यकुहरे
स्मर श्रीपादाब्जं सकृदपि पुरारेरनुदिनम् ॥११॥

स्थितोऽस्मि त्वां पश्यंश्चिरमभिदयैवं तव कृते
मदर्थासु स्थाणोर्हृदय परिचर्यासु विमुखः ।
इदानीं निर्विण्णोऽस्म्यलमुपगतस्तेऽद्य समयो
यदात्मन्यप्यास्थां जहति सुहृदर्थे कृतविदः ॥१२॥

उपायं ते चेतः परमुपदिशामि स्मररिपोः
पदाम्भोजद्वन्द्वे परवशतया रज्यसि यतः ।
अवश्यं भोक्तव्यामनुदिनमतर्क्योपगमनां
दशामन्त्यामन्तः सपदि गणयोपस्थिततराम् ॥१३॥

अलभ्येष्वप्यर्थेष्वधिकचपलानक्षपृथुका-
नतृप्तानत्यर्थं सुचिरमनुवृत्तानपि तथा ।
अशक्यं ते शंभोर्भजनमनुरुध्यैवमशुची-
नुपेक्षैवोपायस्तव हृदय तेषामुपशमे ॥१४॥

चिरात् कश्चिद् व्याधः शिव इति वसत्यद्रिशिखरे
स ते मायी भूत्वा धनमहरदृद्धं सुखनिधिम् ।
स लब्धश्चेद् दैवात् क्वचन पथि पाशैः स्मृतिमयैः
सखे तं बध्नीया हृदय निभृतं दास्यति पुनः ॥१५॥

बहिस्त्वं वैयग्र्यं प्रकटय परं लौकिककृति-
ष्ववर्ज्यासु स्थैर्यं भज पशुपतेः पादकमले ।
विटेषु स्निह्यन्तीरिव बहिरसारैरभिनयै-
र्धने बद्धासङ्गा गणय धिषणे वारवनिताः ॥१६॥

महादेवध्यानान्मम शरणमन्यन्न कलये
भवग्राहग्रासोल्लसितभववेगावधि भुवि ।
प्रसीद प्रागल्भ्यं तदिह परिगृह्याद्य महतो
भयात् त्रायस्वैनं भगवति नमस्तेऽस्तु धिषणे ॥१७॥

बुद्धे सुखैकरसिकासि विवेकयुक्ता
सञ्चिन्तयस्व हह किं विषयानभिज्ञा ।
किं प्राप्तवत्यसि सुखं विषयानुषङ्गाद्
दुःखं विना तदलमीश्वरमाश्रय त्वम् ॥१८॥

॥ इति श्रीमदप्पय्यदीक्षितकृतिषु मानसोल्लासः समाप्तः ॥



# ❁ विष्णुस्तोत्राणि ❁

## विष्णुपूजास्तोत्रम्

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं ।
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ॥
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं ।
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥१॥

आराधयामि मणिसन्निभमात्मविष्णुं मायापुरे हृदयपङ्कजसन्निवष्टम् ।
श्रद्धानदीविमलचित्तजलाभिषिक्तं नित्यं समाधिकुसुमैर्न पुनर्भवाय ॥२॥

ज्योतिश्शान्तं सर्वलोकान्तरस्थमोङ्काराख्यं योगिहृद्ध्यानगम्यम् ।
साङ्गं शक्तिः सायुधं भक्तसेव्यं सर्वाकारं विष्णुमावाहयामि ॥३॥

कल्पद्रुमूले मणिवेदमध्ये सिंहासनं स्वर्णमयं सरत्नम् ।
विचित्रवस्त्रावृतमच्युत प्रभो गृहाण लक्ष्मीधरणीसमन्वित ॥४॥

पादोदकं ते परिकल्पयामि पुण्यं सरित्सागरतोपनीतम् ।
पाद्यं प्रदास्ये सुमनस्समेतं गृहाण लक्ष्मीधरणीसमन्वित ॥५॥

ब्रह्मेन्द्ररुद्राग्निमुनीन्द्रसेव्य पादारविन्दाम्बुदसन्निभाङ्ग ।
अर्घ्यं गृहाणाश्रितपारिजात श्रियासहाम्भोजदलायताक्ष ॥६॥

तीर्थोदकं गाङ्गमिदं हि विष्णो त्रिविक्रमानन्त मया निवेदितम् ।
दध्याज्ययुक्तं मधुपर्कसंज्ञं गृहाण देवेश यथाक्रमेण ॥७॥

आकल्पसंशोभितदिव्यगात्र राकेन्दुनीकाशमुखारविंद ।
दत्तं मया चाचमनं गृहाण श्रीकेशवानन्त धरारिदारिन् ॥८॥

तीर्थोदकैः काञ्चनकुम्भसंस्थैस्सुवासितैर्देव सुमन्त्रपूतैः ।
मयार्पितं स्नानमिदं गृहाण पादाब्जनिष्टच्यूतनदीप्रवाह ॥९॥

मंदाकिनी जह्नुसुताथ गौतमी वेण्यादितीर्थेषु च पुण्यवत्सु ।
आनीतमम्भोधनसारयुक्तं श्रीखंडमिश्रं कुसुमादिसंश्रितम् ॥१०॥

कामधेनोस्ससुद्भूतं देवर्षिपितृतृप्तिदम् ।
पयो ददामि देवेश स्नानार्थं प्रतिगृह्यताम् ॥११॥

चन्द्रमंडलसंकाशं सर्वदेवप्रियं दधिम् ।
स्नानार्थं ते मया दत्तं प्रीत्यर्थं प्रतिगृह्यताम् ॥१२॥

आज्यं सुराणामाहारमाज्यं यज्ञे प्रतिष्ठितम् ।
आज्यं पवित्रं परमं स्नानार्थं प्रतिगृह्यताम् ॥१३॥

सर्वौषधिसमुत्पन्नं पीयूषममृतं मधुः ।
स्नानार्थं ते प्रयच्छामि गृहाण परमेश्वर ॥१४॥

इक्षुदंडसमुद्भूतं दिव्यशर्करया हरिम् ।
स्नापयामि सदा भक्त्या प्रीतो भव सुरेश्वर ॥१५॥

स्वर्णाञ्चलं चित्रतरं सुशोभितं कौशेययुग्मं परिकल्पितं मया ।
दामोदर प्रावरणं गृहाण मायाबलप्रावृतदिव्यरूप ॥१६॥

सुवर्णतंतूद्भवयज्ञसूत्रं मुक्ताफलस्यूतमनेकरत्नम् ।
गृहाण तद्भक्तिप्रियमुत्तरीयं स्वकर्मसूत्रान्तरिणे नमोऽस्तु ॥१७॥

कस्तुरिकाकर्दमचन्दनानि काश्मीरसंयोजितगंधसारैः ।
विलेपनं स्वीकुरु देवदेव श्रीदेवेवक्षोजविलेपनाङ्ग ॥१८॥

श्रीगन्धं चन्दनोन्मिश्रं कर्पूरेण सुसंयुतम् ।
विलेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यताम् ॥१९॥

सेवन्तिकाबकुलचम्पकपाटलाब्जैः पुन्नागजातिकरवीररसालपुष्पैः ॥२०॥
बिल्वप्रवालतुलसीदलमल्लिकाभिस्त्वां पूजयामि जगदीश्वर मे प्रसीद ॥२१॥

आरामपुष्पाणि मनोहराणि जलाशयस्थानि सुपल्लवानि ।
सुवर्णपुष्पाणि मयार्पितानि त्वं गृह्यतां देववर प्रसीद ॥२२॥

केयूरकटके चैव हस्ते चित्रांगुलीयकम् ।
माणिक्योल्लासिमुकुटं कुंडले हारशोभितम् ॥२३॥

नाभौ नायकरत्नं च नूपुरे पादपद्मयोः ।
अङ्गुलीमुद्रिकाश्चैव गृहाण पुरुषोत्तम ॥२४॥

श्रीखंडलाक्षासितकाष्ठदिव्यकर्पूरकालागुरुकर्दमानि ।
स्वचोरकाचन्दनदेवदारुमांसीनखं शैलजपूतिकाञ्च ॥२५॥

कालागुरुप्रचुरगुग्गुलुगन्धधूपैर्नानाविधैस्सुरभितैः खलु धूप्यमानैः ।
त्वां धूपयामि रघुपुङ्गव वासुदेव लक्ष्मीपते मयि दयां कुरु लोकनाथ ॥२६॥

सूर्येन्दुकोटिप्रभवासुदेव दीपावलिं गोघृतवर्तियुक्ताम् ।
गृहाण लोकत्रयपूजिताङ्घ्रे धर्मप्रदीपान्कुरु दीप्यमानान् ॥२७॥

स्वामिन् लक्ष्मीश देवेश भक्तलोकदयानिधे ।
ज्ञानतोऽज्ञानतो वापि भक्त्या शक्त्या समर्पितम् ॥२८॥

मयोपनीतं नैवेद्यं पञ्चभक्ष्यसुभोजनम् ।
मक्षिका मशकाः केशाः पृथु बीजानि वल्कलाः ॥२९॥

पाषाणमस्थिकं सर्वं कृमिकीटपिपीलिकाः ।
एतान्सर्वान्परित्यज्य शुचि पाकानि यानि वै ॥३०॥

तानि सर्वाणि गृह्णीष्व मया दत्तानि माधव ।
कदलीपनसाम्राणां सुपक्वानि फलानि च ॥३१॥

अन्नं चतुर्विधं सूपं सद्यस्तप्तं घृतं दधिम् ।
मया समर्पितं सर्वं संगृहाण श्रिया सह ॥३२॥

सौवर्णस्थालिमध्ये मणिगणखचिते गोघृताक्तान् सुपक्वान्
भक्ष्यान्भोज्यांश्च लेह्यानपरिमितमहाचोष्यमन्नं निधाय ।
नानाशाकैरुपेतं दधिमधुसुगुडक्षीरपानीययुक्तं
ताम्बूलं चापि विष्णो प्रतिदिनमहं मानसे कल्पयामि ॥३३॥

सुपूगखंडैश्च सुशुभ्रपर्णैस्सशंखचूर्णैर्घनसारमिश्रैः ।
मयार्पितं देव दयासमुद्र ताम्बूलमेतत्प्रमुदा गृहाण ॥३४॥

नीराजनं स्वीकुरु देवदेव नीलोत्पलश्रीकर नीरजाक्ष ।
गृहाण देवासुरमौलिरत्न मरीचिनीराजितपादपद्म ॥३५॥

पुष्पाञ्जलिं स्वीकुरु पुष्कराक्ष प्रसन्नकल्पद्रुमपारिजात ।
इन्द्रादिवृन्दारकवन्द्यपाद नमो नमस्ते तु वर प्रसीद ॥३६॥

यानि कानि च पापानि जन्मान्तरकृतानि च ।
तानि तानि प्रणश्यंति प्रदक्षिणपदे पदे ॥३७॥

पापोऽहं पापकर्माहं पापात्मा पापसंभवः ।
त्राहि मां कृपया देव शरणागतवत्सल ॥३८॥

अन्यथा शरणं नास्ति त्वमेव शरणं मम ।
तस्मात्कारुण्यभावेन रक्ष रक्ष जनार्दन ॥३९॥

नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः ॥४०॥

आवाहनं न जानामि न जानामि विसर्जनम् ।
पूजां चैव न जानामि क्षमस्व परमेश्वर ॥४१॥
यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु ।
न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् ॥४२॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन ।
यत्पूजितं मया देव परिपूर्णं तदस्तु ते ॥४३॥
अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
दासोऽयमिति मां मत्वा क्षमस्व परमेश्वर ॥४४॥
मत्समो नास्ति पापिष्ठः त्वत्समो नास्ति पापहा ।
इति संचिन्त्य देवेश यथेच्छसि तथा कुरु ॥४५॥
भूमौ स्खलितपदानां भूमिरेवावलम्बनम् ।
त्वयि जातापराधानां त्वमेव शरणं मम ॥४६॥
गतं पापं गतं दुःखं गतं दारिद्र्यमेव च ।
आगता सुखसंपत्तिः पुण्योऽहं तव दर्शनात् ॥४७॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।
पुत्रान् देहि धनं देहि सर्वान्कामांश्च देहि मे ॥४८॥

॥ इति श्रीविष्णुपूजा समाप्ता ॥



## श्रीगोविन्ददामोदरस्तोत्रम्

अग्रे कुरूणामथ पाण्डवानां दुःशासनेनाहृतवस्त्रकेशा ।
कृष्णा तदाक्रोशदनन्यनाथा गोविन्द दामोदर माधवेति ॥१॥
श्रीकृष्ण विष्णो मधुकैटभारे भक्तानुकम्पिन् भगवन् मुरारे ।
त्रायस्व मां केशव लोकनाथ गोविन्द० ॥२॥
विक्रेतुकामाखिलगोपकन्या मुरारिपादार्पितचित्तवृत्तिः ।
दध्यादिकं मोहवशादवोचद् गोविन्द० ॥३॥
उलूखले सम्भृततण्डुलांश्च संघट्टयन्त्यो मुशलैः प्रमुग्धाः ।
गायन्ति गोप्यः जनितानुरागा गोविन्द० ॥४॥
काचित्कराम्भोजपुटे निषण्णं क्रीडाशुकं किंशुकरक्ततुण्डम् ।
अध्यापयामास सरोरुहाक्षी गोविन्द० ॥५॥
गृहे गृहे गोपवधूसमूहः प्रतिक्षणं पिञ्जरसारिकाणाम् ।
स्खलद्गिरं वाचयितुं प्रवृत्तो गोविन्द० ॥६॥

पर्य्यङ्किकाभाजमलं कुमारं प्रस्वापयन्त्योऽखिलगोपकन्याः ।
जगुः प्रबन्धं स्वरतालबन्धं गोविन्द० ॥७॥
रामानुजं वीक्षणकेलिलोलं गोपी गृहीत्वा नवनीतगोलम् ।
आबालकं बालकमाजुहाव गोविन्द० ॥८॥
विचित्रवर्णाभरणाभिरामेऽभिधेहि वक्त्राम्बुजराजहंसि ।
सदा मदीये रसनेऽग्ररङ्गे गोविन्द० ॥९॥
अङ्काधिरूढं शिशुगोपगूढं स्तनन्धयन्तं कमलैककान्तम् ।
सम्बोधयामास मुदा यशोदा गोविन्द० ॥१०॥
क्रीडन्तमन्तर्व्रजमातमजं स्वं समं वयस्यः पशुपालबालैः ।
प्रेम्णा यशोदा प्रजुहाव कृष्ण गोविन्द० ॥११॥
यशोदया गाढमुलूखलेन गोकण्ठपाशेन निबध्यमानः ।
रुरोद मन्दं नवनीतभोजी गोविन्द० ॥१२॥
निजाङ्गने कङ्कणकेलिलोलं गोपी गृहीत्वा नवनीतगोलम् ।
आमर्दयत्पाणितलेन नेत्रे गोविन्द० ॥१३॥
गृहे गृहे गोपवधूकदम्बाः सर्वे मिलित्वा समवाययोगे ।
पुण्यानि नामानि पठन्ति नित्यं गोविन्द० ॥१४॥
मन्दारमूले वदनाभिरामं बिम्बाधरे पूरितवेणुनादम् ।
गोगोपगोपीजनमध्यसंस्थं गोविन्द० ॥१५॥
उत्थाय गोप्योऽपररात्रभागे स्मृत्वा यशोदासुतबालकेलिम् ।
गायन्ति प्रोच्चैर्दधिमन्थयन्त्यो गोविन्द० ॥१६॥
जग्धोऽथ दत्तो नवनीतपिण्डो गृहे यशोदा विचिकित्सयन्ती ।
उवाच सत्यं वद हे मुरारे गोविन्द० ॥१७॥
अभ्यर्च्य गेहं युवतिः प्रवृद्धप्रेमप्रवाहा दधि निर्ममन्थ ।
गायन्ति गोप्योऽथ सखीसमेता गोविन्द० ॥१८॥
क्वचित् प्रभाते दधिपूर्णपात्रे निक्षिप्य मन्थं युवती मुकुन्दम् ।
आलोक्य गानं विविधं करोति गोविन्द० ॥१९॥
क्रीडापरं भोजनमज्जनार्थं हितैषिणी स्त्री तनुजं यशोदा ।
आजूहवत् प्रेमपरिप्लुताक्षी गोविन्द० ॥२०॥
सुखं शयानं निलये च विष्णुं देवर्षिमुख्या मुनयः प्रपन्नाः ।
तेनाच्युते तन्मयतां व्रजन्ति गोविन्द० ॥२१॥
विहाय निद्रामरुणोदये च विधाय कृत्यानि च विप्रमुख्याः ।
वेदावसाने प्रपठन्ति नित्यं गोविन्द० ॥२२॥

वृन्दावने गोपगणाश्च गोप्यो विलोक्य गोविन्दवियोगखिन्नाम् ।
राधा जगुः साश्रुविलोचनाभ्यां गोविन्द० ॥२३॥

प्रभातसञ्चारगता नु गावस्तद्रक्षणार्थं तनयं यशोदा ।
प्राबोधयत् पाणितलेन मन्दं गोविन्द० ॥२४॥

प्रवालशोभा इव दीर्घकेशा वाताम्बुपर्णाशनपूतदेहाः ।
मूले तरूणां मुनयः पठन्ति गोविन्द० ॥२५॥

एवं ब्रुवाणा विरहातुरा भृशं व्रजस्त्रियः कृष्णविषक्तमानसाः ।
विसृज्य लज्जां रुरुदुस्म सुस्वरं गोविन्द० ॥२६॥

गोपी कदाचिन्मणिपिञ्जरस्थं शुकं वचो वाचयितुं प्रवृत्ता ।
आनन्दकन्द व्रजचन्द्र कृष्ण गोविन्द० ॥२७॥

गोवत्सबालैः शिशुकाकपक्षं बध्नन्तमम्भोजदलायताक्षम् ।
उवाच माता चिबुकं गृहीत्वा गोविन्द० ॥२८॥

प्रभातकाले वरबल्लवौघा गोरक्षणार्थं धृतवेत्रदण्डाः ।
आकारयामासुरनन्तमाद्यं गोविन्द० ॥२९॥

जलाशये कालियमर्दनाय यदा कदम्बादपतन्मुरारिः ।
गोपाङ्गनाश्चक्रुशुरेत्य गोपाः गोविन्द० ॥३०॥

अक्रूरमासाद्य यदा मुकुन्दश्चापोत्सवार्थं मथुरां प्रविष्टः ।
तदा स पौरैर्जयतीत्यभाषि गोविन्द० ॥३१॥

कंसस्य दूतेन यदैव नीतौ वृन्दावनान्ताद् वसुदेवसूनू ।
रुरोद गोपी भवनस्य मध्ये गोविन्द० ॥३२॥

सरोवरे कालियनागबद्धं शिशुं यशोदातनयं निशम्य ।
चक्रुर्लुठन्त्यः पथि गोपबाला गोविन्द० ॥३३॥

अक्रूरयाने यदुवंशनाथं संगच्छमानं मथुरां निरीक्ष्य ।
ऊचुर्वियोगात् किल गोपबाला गोविन्द० ॥३४॥

चक्रन्द गोपी नलिनीवनान्ते कृष्णेन हीना कुसुमे शयाना ।
प्रफुल्लनीलोत्पललोचनाभ्यां गोविन्द० ॥३५॥

मातापितृभ्यां परिवार्यमाणा गेहं प्रविष्टा विललाप गोपी ।
आगत्य मां पालय विश्वनाथ गोविन्द० ॥३६॥

वृन्दावनस्थं हरिमाशु बुद्ध्वा गोपी गता कापि वनं निशायाम् ।
तत्राप्यदृष्ट्वातिभयादवोचद् गोविन्द ॥३७॥

सुखं शयाना निलये निजेऽपि नामानि विष्णोः प्रवदन्ति मर्त्याः ।
ते निश्चितं तन्मयतां व्रजन्ति गोविन्द० ॥३८॥

सा नीरजाक्षीमवलोक्य राधां रुरोद गोविन्दवियोगखिन्नाम् ।
सखी प्रफुल्लोत्पललोचनाभ्यां गोविन्द० ॥३९॥

जिह्वे रसज्ञे मधुरप्रिया त्वं सत्यं हितं त्वां परमं वदामि ।
आवर्णयेथा मधुराक्षराणि गोविन्द० ॥४०॥

आत्यन्तिकव्याधिहरं जनानां चिकित्सकं वेदविदो वदन्ति ।
संसारतापत्रयनाशबीजं गोविन्द० ॥४१॥

ताताज्ञया गच्छति रामचन्द्रे सलक्ष्मणेऽरण्यचये ससीते ।
चक्रन्द रामस्य निजा जनित्री गोविन्द० ॥४२॥

एकाकिनी दण्डककाननान्तात् सा नीयमाना दशकन्धरेण ।
सीता तदाक्रन्ददनन्यनाथा गोविन्द० ॥४३॥

रामाद्वियुक्ता जनकात्मजा सा विचिन्त्यन्ती हृदि रामरूपम् ।
रुरोद सीता रघुनाथ पाहि गोविन्द० ॥४४॥

प्रसीद विष्णो रघुवंशनाथ सुरासुराणां सुखदुःखहेतो ।
रुरोद सीता तु समुद्रमध्ये गोविन्द० ॥४५॥

अन्तर्जले ग्राहगृहीतपादो विसृष्टविक्लिष्टसमस्तबन्धुः ।
तदा गजेन्द्रो नितरां जगाद गोविन्द० ॥४६॥

हंसध्वजः शङ्खयुतो ददर्श पुत्रं कटाहे प्रतपन्तमेनम् ।
पुण्यानि नामानि हरेर्जपन्तं गोविन्द० ॥४७॥

दुर्वाससो वाक्यमुपेत्य कृष्णा सा चाब्रवीत् काननवासिनीशम् ।
अन्तः प्रविष्टं मनसा जुहाव गोविन्द० ॥४८॥

ध्येयः सदा योगिभिरप्रमेयः चिन्ताहरश्चिन्तितपारिजातः ।
कस्तूरिकाकल्पितनीलवर्णो गोविन्द० ॥४९॥

संसारकूपे पतितोऽत्यगाधे मोहान्धपूर्णे विषयाभितप्ते ।
करावलम्बं मम देहि विष्णो गोविन्द० ॥५०॥

त्वामेव याचे मम देहि जिह्वे समागते दण्डधरे कृतान्ते ।
वक्तव्यमेवं मधुरं सुभक्त्या गोविन्द० ॥५१॥

भजस्व मन्त्रं भवबन्धमुक्त्यै जिह्वे रसज्ञे सुलभं मनोज्ञम् ।
द्वैपायनाद्यैर्मुनिभिः प्रजप्तं गोविन्द० ॥५२॥

गोपाल वंशीधर रूपसिन्धो लोकेश नारायण दीनबन्धो ।
उच्चस्वरैस्त्वं वद सर्वदैव गोविन्द० ॥५३॥

जिह्वे सदैवं भज सुन्दराणि नामानि कृष्णस्य मनोहराणि ।
समस्तभक्तार्तिविनाशनानि गोविन्द० ॥५४॥

गोविन्द गोविन्द हरे मुरारे गोविन्द गोविन्द मुकुन्द कृष्ण ।
गोविन्द गोविन्द रथाङ्गपाणे गोविन्द० ॥५५॥

सुखावसाने त्विदमेव सारं दुःखावसाने त्विदमेव गेयम् ।
देहावसाने त्विदमेव जाप्यं गोविन्द० ॥५६॥

दुर्वारवाक्यं परिगृह्य कृष्णा मृगीव भीता तु कथं कथञ्चित् ।
सभां प्रविष्टा मनसा जुहाव गोविन्द० ॥५७॥

श्रीकृष्ण राधावर गोकुलेश गोपाल गोवर्धन नाथ विष्णो ।
जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥५८॥

श्रीनाथ विश्वेश्वर विश्वमूर्ते श्रीदेवकीनन्दन दैत्यशत्रो ।
जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥५९॥

गोपीपते कंसरिपो मुकुन्द लक्ष्मीपते केशव वासुदेव ।
जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥६०॥

गोपीजनाह्लादकर व्रजेश गोचारणारण्यकृतप्रवेश ।
जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥६१॥

प्राणेश विश्वम्भर कैटभारे वैकुण्ठ नारायण चक्रपाणे ।
जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥६२॥

हरे मुरारे मधुसूदनाद्य श्रीराम सीतावर रावणारे ।
जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥६३॥

श्रीयादवेन्द्राद्रिधराम्बुजाक्ष गोगोपगोपीसुखदानदक्ष ।
जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥६४॥

धराभरोत्तारणगोपवेष विहारलीलाकृतबन्धुशेष ।
जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥६५॥

बकीबकाघासुरधेनुकारे केशीतृणावर्तविघातदक्ष ।
जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥६६॥

श्रीजानकीजीवन रामचन्द्र निशाचरारे भरताग्रजेश ।
जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥६७॥

नारायणानन्त हरे नृसिंह प्रह्लादबाधाहर हे कृपालो ।
जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥६८॥
लीलामनुष्याकृतिरामरूप प्रतापदासीकृतसर्वभूप ।
जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥६९॥
श्रीकृष्ण गोविन्द हरे मुरारे हे नाथ नारायण वासुदेव ।
जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥७०॥
वक्तुं समर्थोऽपि न वक्ति कश्चिदहो जनानां व्यसनाभिमुख्यम् ।
जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥७१॥

इति श्रीबिल्वमङ्गलाचार्यविरचितं श्रीगोविन्ददामोदरस्तोत्रं सम्पूर्णम् ।

•

## रमापत्यष्टकम्

जगदादिमनादिमजं पुरुषं शरदंबरतुल्यतनुं वितनुम् ।
धृतकंजरथांगगदं विगदं प्रणमामि रमाधिपतिं तमहम् ॥१॥
कमलाननकंजरतं विरतं हृदि योगिजनैः कलितं ललितम् ।
कुजनैः सुजनैरलभं सुलभं प्रण० ॥२॥
मुनिवृंदहृदिस्थपदं सुपदं निखिलाध्वरभागभुजं सुभुजम् ।
हृतवासवमुख्यमदं विमदं प्रण० ॥ ॥
हृतदानवदृप्तबलं सुबलं स्वजनास्तसमस्तमलं विमलम् ।
समपास्तगजेंद्रदरं सुदरं प्रण० ॥४॥
परिकल्पितसर्वकलं विकलं सकलागमगीतगुणं विगुणम् ।
भवपाशनिराकरणं शरणं प्रण० ॥५॥
मृतिजन्मजराशमनं कमनं शरणागतभीतिहरं दहरम् ।
परितुष्टरमाहृदयं सुदयं प्रण० ॥६॥
सकलावनिबिंबधरं स्वधरं परिपूरितसर्वदिशं सुदृशम् ।
गतशोकमशोककरं सुकरं प्रण० ॥७॥
मथितार्णवराजरसं सरसं प्रथिताखिललोकहृदं सुहृदम् ।
प्रथिताद्भुतशक्तिगणं सुगणं प्रण० ॥८॥
सुखराशिकरं भवबंधहरं परमाष्टकमेतदनन्यमतिः ।
पठतीह तु योऽनिशमेव नरो लभते खलु विष्णुपदं स परम् ॥९॥

इति श्रीपरमहंसस्वामिब्रह्मानंदविरचितं श्रीरमापत्यष्टकं संपूर्णम् ॥

•

## गोविन्दाष्टकम् (१)

सत्यं ज्ञानमनन्तं नित्यमनाकाशं परमाकाशं
गोष्ठप्राङ्गणरिङ्खणलोलमनायासं परमायासम् ।
मायाकल्पितनानाकारमनाकारं भुवनाकारं
क्ष्मामानाथमनाथं प्रणमत गोविन्दं परमानन्दम् ॥१॥

मृत्स्नामत्सीहेति यशोदाताडनशैशवसंत्रासं
व्यादित्तवक्त्रालोकितलोकालोकचतुर्दशलोकालिम् ।
लोकत्रयपुरमूलस्तम्भं लोकालोकमनालोकं
लोकेशं परमेशं प्रणमत गोविन्दं परमानन्दम् ॥२॥

त्रैविष्टपरिपुवीरघ्नं क्षितिभारघ्नं भवरोगघ्नं
कैवल्यं नवनीताहारमनाहारं भुवनाहारम् ।
वैमल्यस्फुटचेतोवृत्तिविशेषाभासमनाभासं
शैवं केवलशान्तं प्रणमत गोविन्दं परमानन्दम् ॥३॥

गोपालं प्रभुलीलाविग्रहगोपालं कुलगोपालं
गोपीखेलनगोवर्धनधृतिलीलालालितगोपालम् ।
गोभिर्निगदितगोविन्दस्फुटनामानं बहुनामानं
गोपीगोचरपथिकं प्रणमत गोविन्दं परमानन्दम् ॥४॥

गोपीमण्डलगोष्ठीभेदं भेदावस्थमभेदाभं
शश्वद्गोखुरनिर्धूतोद्गतधूलीधूसरसौभाग्यम् ।
श्रद्धाभक्तिगृहीतानन्दमचिन्त्यं चिन्तितसद्भावं
चिन्तामणिमहिमानं प्रणमत गोविन्दं परमानन्दम् ॥५॥

स्नानव्यापृतयोषिद्वस्त्रमुपादायागमुपारूढं
व्यादित्सन्तीरथ दिग्वस्त्राद्युपदातुमुपाकर्षन्तम् ।
निर्धूतद्वयशोकविमोहं बुद्धेरप्यन्तःस्थं
सत्तामात्रशरीरं प्रणमत गोविन्दं परमानन्दम् ॥६॥

कान्तं कारणकारणमादिमनादिं कालघनाभासं
कालिन्दीगतकालियशिरसि मुहुर्नृत्यन्तं सुसहन्तम् ।
कालं कालकलातीतं कलिताशेषं कलिदोषघ्नं
कालत्रयगतिहेतुं प्रणमत गोविन्दं परमानन्दम् ॥७॥

वृन्दावनभुवि वृन्दारकगणवृन्दाराधितमन्देहं
कुन्दाभामलमन्दस्मेरसुधानन्दं सुहृदानन्दम् ।
वन्द्याशेषमहामुनिमानसवन्द्यानन्दपदद्वन्द्वं
वन्द्याशेषगुणाब्धिं प्रणमत गोविन्दं परमानन्दम् ॥८॥
गोविन्दाष्टकमेतदधीते गोविन्दार्पितचेता यो
गोविन्दाच्युत माधव विष्णो गोकुलनायक कृष्णेति ।
गोविन्दाङ्घ्रिसरोजध्यानसुधाजलधौतसमस्ताघं
गोविन्दं परमानन्दामृतमन्तःस्थं स समभ्येति ॥९॥
इति श्रीमच्छङ्करभगवतः कृतौ गोविन्दाष्टकं संपूर्णम् ॥

•

## गोविंदाष्टकम् (२)

चिदानंदाकारं श्रुतिसरससारं समरसं निराधाराधारं भवजलधिपारं परगुणम् ।
रमाग्रीवाहारं व्रजवनविहारं हरनुतं सदा तं गोविंदं परमसुखकंदं भजत रे ॥१॥
महांभोधिस्थानं स्थिरचरनिदानं दिविजपं सुधाधारापानं विहगपतियानं यमरतम् ।
मनोज्ञं सुज्ञानं मुनिजननिधानं ध्रुवपदं सदा० ॥२॥
धिया धीरैर्ध्येयं श्रवणपुटपेयं यतिवरैर्महावाक्यैर्ज्ञेयं त्रिभुवनविधेयं विधिपरम् ।
मनोमानामेयं सपदि हृदि नेयं नवतनुं सदा० ॥३॥
महामायाजालं विमलवनमालं मलहरं सुभालं गोपालं निहतशिशुपालं शशिमुखम् ।
गलातीतं कालं गतिहयमरालं मुररिपुं सदा० ॥४॥
नभोबिम्बस्फीतं निगमगणगीतं समगतिं सुरौघे संप्रीतं दितिजविपरीतं पुरिशयम् ।
गिरां पंथातीतं स्वदितनवनीतं नयकरं सदा० ॥५॥
परेशं पद्मेशं शिवकमलजेशं शिवकरं द्विजेशं देवेशं तनुकुटिलकेशं कलिहरम् ।
खगेशं नागेशं निखिलभुवनेशं नगधरं सदा० ॥६॥
रमाकांत कांतं भवभयभयांतं भवसुखं दुराशांतं शांतं निखिलहृदि भांतं भुवनपम् ।
विवादांतं दांतं दनुजनिचयांतं सुचरितं सदा० ॥७॥
जगज्ज्येष्ठं श्रेष्ठं सुरपतिकनिष्ठं क्रतुपतिं बलिष्ठं भूयिष्ठं त्रिभुवनवरिष्ठं वरवहम् ।
स्वनिष्ठं धर्मिष्ठं गुरुगुणगरिष्ठं गुरुवरं सदा० ॥८॥
गदापाणेरेतद्दुरितदलनं दुःखशमनं
विशुद्धात्मा स्तोत्रं पठति मनुजो यस्तु सततम् ।
स भुक्त्वा भोगौघं चिरमिह ततोऽपास्तवृजिनो
वरं विष्णोः स्थानं व्रजति खलु वैकुंठभुवनम् ॥९॥
इति श्रीपरमहंसस्वामिब्रह्मानंदविरचितं श्रीगोविंदाष्टकं संपूर्णम् ॥

•

## अच्युताष्टकम्

अच्युतं केशवं रामनारायणं कृष्णदामोदरं वासुदेवं हरिम् ।
श्रीधरं माधवं गोपिकावल्लभं जानकीनायकं रामचन्द्रं भजे ॥१॥

अच्युतं केशवं सत्यभामाधवं माधवं श्रीधरं राधिकाराधितम् ।
इन्दिरामन्दिरं चेतसा सुन्दरं देवकीनन्दनं नन्दनं संदधे ॥२॥

विष्णवे जिष्णवे शङ्खिने चक्रिणे रुक्मिणीरागिणे जानकीनायके ।
बल्लवीवल्लभायार्चितायात्मने कंसविध्वंसिने वंशिने ते नमः ॥३॥

कृष्ण गोविन्द हे राम नारायण श्रीपते वासुदेवाजित श्रीनिधे ।
अच्युतानन्त हे माधवाधोक्षज द्वारकानायक द्रौपदीरक्षक ॥४॥

राक्षसक्षोभितः सीतया शोभितो दण्डकारण्यभूपुण्यताकारणम् ।
लक्ष्मणेनान्वितो वानरैः सेवितोऽगस्त्यसंपूजितो राघवः पातु माम् ॥५॥

धेनुकारिष्टहानिष्टकृद्द्वेषिणां केशिहा कंसहृद्वंशिकावादकः ।
पूतनाकोपकः सूरजाखेलनो बालगोपालकः पातु मां सर्वदा ॥६॥

विद्युदुद्द्योतवत्प्रस्फुरद्वाससं प्रावृडम्भोदवत्प्रोल्लसद्विग्रहम् ।
वन्यया मालया शोभितोरःस्थलं लोहिताङ्घ्रिद्वयं वारिजाक्षं भजे ॥७॥

कुञ्चितैः कुन्तलैर्भ्राजमानाननं रत्नमौलिं लसत्कुण्डलं गण्डयोः ।
हारकेयूरकं कङ्कणप्रोज्ज्वलं किंकिणीमञ्जुलं श्यामलं तं भजे ॥८॥

अच्युतस्याष्टकं यः पठेदिष्टदं प्रेमतः प्रत्यहं पूरुषः सस्पृहम् ।
वृत्ततः सुन्दरं कर्तृविश्वंभरं तस्य वश्यो हरिर्जायते सत्वरम् ॥९॥

इति श्रीमच्छंकरभगवतः कृतौ अच्युताष्टकं संपूर्णम् ॥

•

## श्रीजगन्नाथाष्टकम्

कदाचित्कालिंदीतटविपिनसंगीतकरवो मुदाभीरीनारीवदनकमलास्वादमधुपः ।
रमाशंभुब्रह्मामरपतिगणेशार्चितपदो जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥१॥

भुजे सव्ये वेणुं शिरसि शिखिपिच्छं कटितटे दुकूलं नेत्रांते सहचरकटाक्षं विदधते ।
सदा श्रीमद्वृंदावनवसतिलीलापरिचयो जगन्नाथः स्वामी० ॥२॥

महांभोधेस्तीरे कनकरुचिरे नीलशिखरे वसन् प्रासादांतः सहजबलभद्रेण बलिना ।
सुभद्रामध्यस्थः सकलसुरसेवावसरदो जगन्नाथः स्वामी० ॥३॥
कृपापारावारः सजलजलदश्रेणिरुचिरोरमावाणीरामस्फुरदमलपद्मेक्षणमुखैः ।
सुरेंद्रैराराध्यः श्रुतिगणशिखागीतचरितो जगन्नाथः स्वामी० ॥४॥
रथारूढो गच्छन् पथि मिलितभूदेवपटलैः स्तुतिप्रादुर्भावं प्रतिपदमुपाकर्ण्य सदयः ।
दयासिंधुर्बन्धुः सकलजगतां सिंधुसुतया जगन्नाथः स्वामी० ॥५॥
परब्रह्मापीडः कुवलयदलोत्फुल्लनयनो निवासी नीलाद्रौ निहितचरणोऽनंतशिरसि ।
रसानंदो राधासरसवपुरालिङ्गनसुखो जगन्नाथः स्वामी० ॥६॥
न वै प्रार्थ्यं राज्यं न च कनकतां भोगविभवं
न याचेऽहं रम्यां निखिलजनकाम्यां वरवधूम् ।
सदा काले काले प्रमथपतिना ग तचरितो जगन्नाथः स्वामी० ॥७॥
हर त्वं संसारं द्रुततरमसारं सुरपते हर त्वं पापानां विततिमपरां यादवपते ।
अहो दीनानाथं निहितमचलं निश्चितपदं जगन्नाथः स्वामी० ॥८॥

इति श्रीशङ्कराचार्यप्रणीतं जगन्नाथाष्टकं संपूर्णम् ॥

●

## संकष्टनाशनं लक्ष्मीनृसिंहस्तोत्रम्

श्रीमत्पयोनिधिनिकेतन चक्रपाणे भोगींद्रभोगमणिरंजित पुण्यमूर्ते ।
योगीश शाश्वत शरण्य भवाब्धिपोत लक्ष्मीनृसिंह मम देहि करावलंबम् ॥१॥
ब्रह्मेंद्ररुद्रमरुदर्ककिरीटकोटिसंघट्टितांघ्रिकमलामलकांतिकांत ।
लक्ष्मीलसत्कुचसरोरुहराजहंस लक्ष्मीनृसिंह० ॥२॥
संसारघोरगहने चरतो मुरारे मारोग्रभीकरमृगप्रचुरार्दितस्य ।
आर्तस्य मत्सरनिदाघनिपीडितस्य लक्ष्मीनृसिंह० ॥३॥
संसारकूपमतिघोरमगाधमूलं संप्राप्य दुःखशतसर्पसमाकुलस्य ।
दीनस्य देव कृपणापदमागतस्य लक्ष्मीनृसिंह० ॥४॥
संसारसागरविशालकरालकालनक्रग्रहग्रसननिग्रहविग्रहस्य ।
व्यग्रस्य रागरसनोर्मिनिपीडितस्य लक्ष्मीनृसिंह० ॥५॥
संसारवृक्षमघवीजमनंतकर्मशाखाशतं करणपत्रमनंतपुष्पम् ।
आरुह्य दुःखफलितं पततो दयालो लक्ष्मीनृसिंह० ॥६॥
संसारसर्पघनवक्त्रभयोग्रतीवदंष्ट्राकरालविषदग्धविनष्टमूर्तेः ।
नागारिवाहन सुधाब्धिनिवास शौरे लक्ष्मीनृसिंह० ॥७॥

संसारदावदहनातुरभीकरोरुज्वालावलीभिरतिदग्धतनूरुहस्य ।
त्वत्पादपद्मसरसीशरणागतस्य लक्ष्मीनृसिंह० ॥८॥
संसारजालपतितस्य जगन्निवास सर्वेन्द्रियार्थबडिशार्थझषोपमस्य ।
प्रोत्खण्डितप्रचुरतासुकमस्तकस्य लक्ष्मीनृसिंह० ॥९॥
संसारभीकरकरींद्रकराभिघातनिष्पिष्टमर्मवपुषः सकलार्तिनाश ।
प्राणप्रयाणभवभीतिसमाकुलस्य लक्ष्मीनृसिंह० ॥१०॥
अंधस्य मे हृतविवेकमहाधनस्य चौरैः प्रभो बलिभिरिन्द्रियनामधेयैः ।
मोहांधकूपकुहरे विनिपातितस्य लक्ष्मीनृसिंह० ॥११॥
लक्ष्मीपते कमलनाभ सुरेश विष्णो वैकुंठ कृष्ण मधुसूदन पुष्कराक्ष ।
ब्रह्मण्य केशव जनार्दन वासुदेव देवेश देहि कृपणस्य करावलम्बम् ॥१२॥
यन्माययोर्जितवपुःप्रचुरप्रवाहमग्नं शरण्य वितरोरु करावलंबम् ।
लक्ष्मीनृसिंहचरणात्तमधुव्रतेन स्तोत्रं कृतं सुखकरं भुवि शङ्करेण ॥१३॥

इति श्रीमच्छंकराचार्यकृतं संकष्टनाशनं लक्ष्मीनृसिंहस्तोत्रं संपूर्णम् ॥



## दशावतारस्तोत्रम् (१)

प्रलयपयोधिजले धृतवानसि वेदं विहितविचित्रचरित्रमखेदम् ।
केशवधृतमीनशरीर जय जगदीश हरे ॥१॥
क्षितिरतिविपुलतरे तव तिष्ठति पृष्ठे धरणिधरणकिणचक्रगरिष्ठे ।
केशव धृतकच्छपरूप जय जगदीश हरे ॥२॥
वसति दशनशिखरे धरणी तव लग्ना शशिनि कलङ्ककलेव निमग्ना ।
केशव धृतसूकररूप जय जगदीश हरे ॥३॥
तव करकमलवरे नखमद्भुतशृङ्गं दलितहिरण्यकशिपुतनुभृङ्गम् ।
केशव धृतनरहरिरूप जय जगदीश हरे ॥४॥
छलयसि विक्रमणे बलिमद्भुतवामन पदनखनीरजनितजनपावन ।
केशव धृतवामनरूप जय जगदीश हरे ॥५॥
क्षत्रियरुधिरमये जगदपगतपापं स्नपयसि पयसि शमितभवतापम् ।
केशव धृतरामशरीर जय जगदीश हरे ॥६॥
वितरसि दिक्षु रणे दिक्पति कमनीयं दशमुखमौलिबलिं रमणीयम् ।
केशव धृतहलधररूप जय जगदीश हरे ॥७॥
वहसि विपुषि विशदे वसनं जलदाभं हलहतिभीतिमिलितयमुनाभम् ।
केशव धृतहलधररूप जय जगदीश हरे ॥८॥

निन्दसि यज्ञविधेरहह श्रुतिजातं सदयहृदयदर्शितपशुघातम् ।
केशव धृतबुद्धशरीर जय जगदीश हरे ॥९॥

म्लेच्छनिवहनिधने कलयसि करवालं धूमकेतुमिव कमपि करालम् ।
केशव धृतकल्किशरीर जय जगदीश हरे ॥१०॥

श्रीजयदेवकवेरिदमुदितमुदारं शृणु सुखदं शुभदं भवसारम् ।
केशव धृतदशविधरूप जय जगदीश हरे ॥११॥

वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते
दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते ।
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
म्लेच्छान् मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥१२॥

इति महाकविजयदेवकृतं दशावतारस्तोत्रं सम्पूर्णम् ॥

•

## दशावतारस्तोत्रम् (२)

आदाय वेदाः सकलाः समुद्रान्निहत्य शङ्खासुरमत्युदग्रम् ।
दत्ताः पुरा येन पितामहाय विष्णुं तमाद्यं भज मत्स्यरूपम् ॥१॥

दिव्यामृतार्थं मथिते महाब्धौ देवासुराभ्यां वासुकिमन्दराभ्याम् ।
भूमेर्महावेगविघूर्णितायास्तं कूर्ममाधारगतं स्मरामि ॥२॥

समुद्रकाञ्ची सरिदुत्तरीया वसुन्धरा मेरुकिरीटभारा ।
दंष्ट्राग्रतो येन समुद्धृता भूस्तमादिकोलं शरणं प्रपद्ये ॥३॥

भक्तार्तिभङ्गक्षमया धिया यः स्तम्भान्तरालादुदितो नृसिंहः ।
रिपुं सुराणां निशितैर्नखाग्रैर्विदारयन्तं न च विस्मरामि ॥४॥

चतुःसमुद्राभरणा धरित्री न्यासाय नालं चरणस्य यस्य ।
एकस्य नान्यस्य पदं सुराणां त्रिविक्रमं सर्वगतं स्मरामि ॥५॥

त्रिःसप्तवारं नृपतीन् निहत्य यस्तर्पणं रक्तमयं पितृभ्यः ।
चकार दोर्दण्डबलेन सम्यक् तमादिशूरं प्रणमामि भक्त्या ॥६॥

कुले रघूणां समवाप्य जन्म विधाय सेतुं जलधेर्जलान्तः ।
लङ्केश्वरं यः शमयाञ्चकार सीतापतिं तं प्रणमामि भक्त्या ॥७॥

हलेन सर्वानसुरान् विकृष्य चकार चूर्णं मुशलप्रहारैः ।
यः कृष्णमासाद्य बलं बलीयान् भक्त्या भजे तं बलभद्ररामम् ॥८॥

पुरा पुराणामसुरान् विजेतं संभावयन् चीवरचिह्नवेशम् ।
चकार यः शास्त्रममोघकल्पं तं मूलभूतं प्रणतोऽस्मि बुद्धम् ॥९॥
कल्पावसाने निखिलैः खुरैः स्वैः संघट्टयामास निमेषमात्रात् ।
यस्तेजसा निर्दहतीति भीमो विश्वात्मकं तं तुरगं भजामः ॥१०॥
शङ्खं सुचक्रं सुगदां सरोजं दोर्भिर्दधानं गरुडाधिरूढम् ।
श्रीवत्सचिह्नं जगदादिमूलं तमालनीलं हृदि विष्णुमीडे ॥११॥
क्षीराम्बुधौ शेषविशेषतल्पे शयानमन्तःस्मितशोभिवक्त्रम् ।
उत्फुल्लनेत्राम्बुजमम्बुजाभमाद्यं श्रुतीनामसकृत् स्मरामि ॥१२॥

प्रीणयेदनया स्तुत्या जगन्नाथं जगन्मयम् ।
धर्मार्थकाममोक्षाणामाप्तये पुरुषोत्तमम् ॥१३॥

इति दशावतारस्तोत्रं सम्पूर्णम् ॥

•

## विष्णुभुजंगप्रयातस्तोत्रम्

चिदंशं विभुं निर्मलं निर्विकल्पं निरीहं निराकारमोंकारगम्यम् ।
गुणातीतमव्यक्तमेकं तुरीयं पदं ब्रह्म यं वेद तस्मै नमस्ते ॥१॥
विशुद्धं शिवं शान्तमाद्यंतशून्यं जगज्जीवनं ज्योतिरानन्दरूपम् ।
अदिग्देशकालव्यवच्छेदनीयं त्रयी वक्ति यं वेद तस्मै नमस्ते ॥२॥
महायोगपीठे परिभ्राजमाने धरण्यादितत्त्वात्मके शक्तियुक्ते ।
गुणाहस्करे वह्निबिम्बार्धमध्ये समासीनमोङ्कर्णिकेऽष्टाक्षराब्जे ॥३॥
समानोदितानेकसूर्येन्दुकोटिप्रभापूरतुल्यद्युतिं दुर्निरीक्षम् ।
न शीतं न चोष्णं सुवर्णावदातप्रसन्नं सदानन्दसंवित्स्वरूपम् ॥४॥
सुनासापुटं सुन्दरभ्रूललाटं किरीटोचिताकुञ्चितस्निग्धकेशम् ।
स्फुरत्पुण्डरीकाभिरामायताक्षं समुत्फुल्लरत्नप्रसूनावतंसम् ॥५॥
लसत्कुण्डलामृष्टगंडस्थलान्तं जपारागचोराधरं चारुहासम् ।
अलिव्याकुलामोदिमन्दारमालं महोरस्फुरत्कौस्तुभोदारहारम् ॥६॥
सुरत्नाङ्गदैरन्वितं बाहुदण्डैश्चतुर्भिश्चलत्कङ्कणालंकृताग्रैः ।
उदारोदरालंकृतं पीतवस्त्रं पदद्वंद्वनिर्धूतपद्माभिरामम् ॥७॥
स्वभक्तेषु संदर्शिताकारमेवं सदा भावयन्सन्निरुद्धेन्द्रियाश्वः ।
दुरापं नरो याति संसारपारं परस्मै परेभ्योऽपि तस्मै नमस्ते ॥८॥
श्रिया शातकुम्भद्युतिस्निग्धकान्त्या धरण्या च दूर्वादलश्यामलङ्ग्या ।
कलत्रद्वयेनामुना तोषिताय त्रिलोकीगृहस्थाय विष्णो नमस्ते ॥९॥

शरीरं कलत्रं सुतं बन्धुवर्गं वयस्यं धनं सद्म भृत्यं भुवं च।
समस्तं परित्यज्य हा कष्टमेको गमिष्यामि दुःखेन दूरं किलाहम् ॥१०॥
जरेयं पिशाचीव हा जीवतो मे वसामक्तिरक्तं च मांसं बलं च।
अहो देव सीदामि दीनानुकंपिन् किमद्यापि हन्त त्वयोदासितव्यम् ॥११॥
कफव्याहतोष्णोल्बणश्वासवेगव्यथाविस्फुरत्सर्वमर्मास्थिबन्धाम्।
विचिन्त्याहमन्त्यामसंख्यामवस्थां बिभेमि प्रभो किं करोमि प्रसीद ॥१२॥
लपन्नच्युतानन्त गोविन्द विष्णो मुरारे हरे नाथ नारायणेति।
यथानुस्मरिष्यामि भक्त्या भवन्तं तथा मे दयाशील देव प्रसीद ॥१३॥
भुजङ्गप्रयातं पठेद्यस्तु भक्त्या समाधाय चित्ते भवन्तं मुरारे।
स मोहं विहायाशु युष्मत्प्रसादात्समाश्रित्य योगं व्रजत्यच्युतं त्वाम् ॥१४॥

इति श्रीमच्छंकरभगवतः कृतौ विष्णुभुजंगप्रयातस्तोत्रं संपूर्णम् ॥

•

## श्रीकृष्णतांडवस्तोत्रम्

भजे व्रजैकनंदनं समस्तपापखंडनं स्वभक्तचित्तरञ्जनं सदैव नन्दनन्दनम्।
सुपिच्छगुच्छमस्तकं सुनादवेणुहस्तकं अनङ्गरङ्गसागरं नमामि कृष्णनागरम् ॥१॥
मनोजगर्वमोचनं विशालभाललोचनं विघातगोपशोभनं नमामि पद्मलोचनम्।
करारविंदभूधरं स्मितावलोकसुन्दरं महेन्द्रमानदारणं नमामि कृष्णवारणम् ॥२॥
कदम्बसूनकुंडलं सुचारुगंडमंडलं व्रजाङ्गनैकवल्लभं नमामि कृष्णदुर्लभम्।
यशोदया समोदया सकोपया दयानिधिं ह्युलूखले सुदुस्सहं नमामि नन्दनन्दनम्॥३॥
नवीनगोपसागरं नवीनकेलिमंदिरं नवीनमेघसुन्दरं भजे व्रजैकमंदिरम्।
सदैव पादपङ्कजं मदीयमानसे निजं दरातिनंदबालकस्समस्तभक्तपालकः ॥४॥
समस्तगोपसागरीहृदां व्रजैकमोहनं नमामि कुञ्जमध्यगं प्रसूनबालशोभनम्।
दृगन्तकान्तलिङ्गनं सहासबालसंगिनं दिनेदिने नवंनवं नमामि नन्दसंभवम् ॥५॥
गुणाकरं सुखाकरं कृपाकरं कृपानवं त्वदासुखैकदायकं नमामि गोपनायकम्।
समस्तदोषशोषणं समस्तलोकतोषणं समस्तदासमानसं नमामि कृष्णलालकम् ६॥
समस्तगोपनागरीनिकामकामदायकं दृगन्तचारुसायकं नमामि वेणुनायकम्।
भवोभवावतारकं भवाब्धिकर्णधारकं यशोदये किशोरकं नमामि दुग्धचोरकम् ।७॥
विमुग्धमुग्धगोपिकामनोजदायकं हरिं नमामि मञ्जुकानने प्रवृद्धवह्निपायनम्।
यथा तथा यथा तथा तथैव कृष्णसत्वदा मया सदैव गीयतां तथा कृपा विधीयताम्

इति श्रीकृष्णतांडवस्तोत्रं संपूर्णम् ॥

•

## मुकुंदमाला

वंदे मुकुंदमरविंददलायताक्षं कुंदेंदुशंखदशनं शिशुगोपवेषम् ।
इंद्रादिदेवगणवंदितपादपीठं वृंदावनालयमहं वसुदेवसूनुम् ॥१॥

श्रीवल्लभेति वरदेति दयापरेति भक्तिप्रियेति भवलुण्ठनकोविदेति ।
नाथेति नागशयनेति जगन्निवासेत्यालापिनं प्रतिदिनं कुरु मां मुकुंद ॥२॥

जयतु जयतु देवो देवकीनंदनोऽयं जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः ।
जयतु जयतु मेघश्यामलः कोमलांगो जयतु जयतु पृथ्वीभारनाशो मुकुंदः ।३।

मुकुंद मूर्धा प्रणिपत्य याचे भवंतमेकांतमियंतमर्थम् ।
अविस्मृतिस्त्वच्चरणारविंदे भवे भवे मेऽस्तु तव प्रसादात् ॥४॥

श्रीगोविंदपदांभोजमधुनो महदद्भुतम् ।
यत्पायिनो न मुञ्चन्ति मुञ्चन्ति यदपायिनः ॥५॥

नाहं वंदे तव चरणयोर्द्वंद्वमद्वंद्वहेतोः
कुंभीपाकं गुरुमपि हरे नारकं नापनेतुम् ।
रम्या रामा मृदुतनुलता नंदने नापि रंतुं
भावे भावे हृदयभवने भावयेयं भवंतम् ॥६॥

नास्था धर्मे न वसुनिचये नैव कामोपभोगे
यद्भाव्यं तद्भवतु भगवन् पूर्वकर्मानुरूपम् ।
एतत्प्रार्थ्यं मम बहु मतं जन्मजन्मांतरेऽपि
त्वत्पादांभोरुहयुगगता निश्चला भक्तिरस्तु ॥७॥

दिवि वा भुवि वा ममास्तु वासो नरके वा नरकांतक प्रकामम् ।
अवधीरितशारदारविंदौ चरणौ ते मरणेऽपि चिंतयामि ॥८॥

सरसिजनयने सशंखचक्रे मुरभिदि मा विरमेह चित्त रंतुम् ।
सुखतरमपरं न जातु जाने हरिचरणस्मरणामृतेन तुल्यम् ॥९॥

मा भैर्मन्द मनो विचिंत्य बहुधा यामीश्चिरं यातना
नैवामी प्रभवंति पापरिपवः स्वामी ननु श्रीधरः ।
आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं
लोकस्य व्यसनापनोदनकरो दासस्य किं न क्षमः ॥१०॥

भवजलधिगतानां द्वंद्ववाताहतानां सुतदुहितृकलत्रत्राणभारार्दितानाम् ।
विषमविषयतोये मज्जतामप्लवानां भवतु शरणमेको विष्णुपोतो नराणाम्।११।

रजसि निपतितानां मोहजालावृतानां जननमरणदोलादुर्गसंसर्गगाणाम् ।
शरणमशरणानामेक एवातुराणां कुशलपथनियुक्तश्चक्रपाणिर्नराणाम् ॥१२॥

अपराधसहस्त्रसंकुलं पतितं भीमभवार्णवोदरे ।
अगतिं शरणागतं हरे कृपया केवलमात्मासत्कुरु ॥१३॥

मा मे स्त्रीत्वं मा च मे स्यात्कुभावो मा मूर्खत्वं मा कुदेशेषु जन्म ।
मिथ्या दृष्टिर्मा च मे स्यात्कदाचिज्जातौ जातौ विष्णुभक्तो भवेयम् ॥१४॥

कायेन वाचा मनसेंद्रियैश्च बुद्धात्मना वाऽनुसृतः स्वभावात् ।
करोमि यद्यत्सकलं परस्मै नारायणायैव समर्पयामि ॥१५॥

यत्कृतं यत्करिष्यामि तत्सर्वं न मया कृतम् ।
त्वया कृतं तु फलभुक् त्वमेव मधुसूदन ॥१६॥

भवजलधिमगाधं दुस्तरं निस्तरेयं
कथमहमिति चेतो मा स्म गाः कातरत्वम् ।
सरसिजदृशि देवे तावकी भक्तिरेका
नरकभिदि निषण्णा तारयिष्यत्यवश्यम् ॥१७॥

तृष्णातोये मदनपवनोद्धूतमोहोर्मिमाले
दारावर्ते तनयसहजग्राहसंघाकुले च ।
संसाराख्ये महति जलधौ मज्जतां नस्त्रिधामन्
पादांभोजे वरद भवतो भक्तिभावं प्रदेहि ॥१८॥

पृथ्वीरेणुरणुः पयांसि कणिकाः फल्गुस्फुर्लिगो लघु-
स्तेजो निःश्वसनं मरुत्तनुतरं रंध्रं सुसूक्ष्मं नभः ।
क्षुद्रा रुद्रपितामहप्रभृतयः कीटाः समस्ताः सुरा
दृष्टे यत्र स तावको विजयते श्रीपादधूलीकणः ॥१९॥

आम्नायाभ्यसनान्यरण्यरुदितं कृच्छ्रव्रतान्यन्वहं
भेदच्छेदफलानि पूर्तविधयः सर्वं हुतं भस्मनि ।
तीर्थानामवगाहनानि च गणस्नानं विना यत्पद-
द्वंद्वांभोरुहसंस्मृतिं विजयते देवः स नारायणः ॥२०॥

आनंद गोविंद मुकुंद राम नारायणानंत निरामयेति ।
वक्तुं समर्थोऽपि न वक्ति कश्चिदहो जनानां व्यसनानि मोक्षे ॥२१॥

क्षीरसागरतरंगसीकरासारतारकितचारुमूर्तये ।
भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः ॥२२॥

इति श्रीकुलशेखरेण विरचिता मुकुंदमाला संपूर्णा ॥

## ध्रुवकृता भगवत्स्तुतिः

ध्रुव उवाच

योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां संजीवयत्यखिलशक्तिधरः स्वधाम्ना ।
अन्यांश्च हस्तचरणश्रवणत्वगादीन् प्राणान्नमो भगवते पुरुषाय तुभ्यम् ॥१॥
एकस्त्वमेव भगवन्निदमात्मशक्त्या मायाख्ययोरुगुणया महदाद्यशेषम् ।
सृष्ट्वाऽनुविश्य पुरुषस्तदसद्गुणेषु नानेव दारुषु विभावसुवद्विभासि ॥२॥
त्वद्दत्तया वयुनयेदमचष्ट विश्वं सुप्तप्रबुद्ध इव नाथ भवत्प्रपन्नः ।
तस्यापवर्ग्यशरणं तव पादमूलं विस्मर्यते कृतविदा कथमार्तबंधो ॥३॥
नूनं विमुष्टमतयस्तव मायया ते ये त्वां भवाप्ययविमोक्षणमन्यहेतोः ।
अर्चन्ति कल्पकतरुं कुणपोपभोग्यमिच्छंति यत्स्पर्शजं निरयेऽपि नृणाम् ॥४॥
या निर्वृतिस्तनुभृतां तव पादपद्म-
ध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् ।
सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्
किंत्वंतकासिलुलितात् पततां विमानात् ॥५॥
भक्तिं मुहुः प्रवहतां त्वयि मे प्रसङ्गो भूयादनंत महताममलाशयानाम् ।
येनाञ्जसोल्बणमुरुव्यसनं भवाब्धिं नेष्ये भवद्गुणकथामृतपानमत्तः ॥६॥
ते न स्मरंत्यतितरां प्रियमीश मर्त्यं ये चान्वदः सुसुहृद्सुगृहवित्तदाराः ।
ये त्वब्जनाभ भवदीयपदारविंदसौगंध्यलुब्धहृदयेषु कृतप्रसङ्गाः ॥७॥
तिर्यङ्नगद्विजसरीसृपदेवदैत्यमर्त्यादिभिः परिचितं सदसद्विशेषम् ।
रूपं स्थविष्ठमज ते महदाद्यनेकं नातः परं परम वेद्मि न यत्र वादः ॥८॥
कल्पांत एतदखिलं जठरेण गृह्णन् शेते पुमान् स्वदृगनंतसखस्तदङ्के ।
यन्नाभिसिंधुरुहकाञ्चनलोकपद्मगर्भे द्युमान् भगवते प्रणतोऽस्मि तस्मै ॥९॥
त्वं नित्यमुक्तपरिशुद्धविशुद्ध आत्मा कूटस्थ आदिपुरुषो भगवांस्त्र्यधीशः ।
यद्बुद्ध्यवस्थितिमखंडितया स्वदृष्ट्या द्रष्टा स्थितावधिमखो व्यतिरिक्त आस्से ॥
यस्मिन् विरुद्धगतयो ह्यनिशं पतंति विद्यादयो विविधशक्तय आनुपूर्व्यात् ।
तद्ब्रह्म विश्वभवमेकमनंतमाद्यमानंदमात्रमविकारमहं प्रपद्ये ॥११॥
सत्याऽऽशिषो हि भगवंस्तव पादपद्ममाशीस्तथाऽनुभजतः पुरुषार्थमूर्तेः ।
अप्येवमर्य भगवान् परिपाति दीनान् वाश्रेव वत्सकमनुग्रहकातरोऽस्मान् ॥१२॥

मैत्रेय उवाच

अथाभिष्टुत एवं वै सत्सङ्कल्पेन धीमता ।
भृत्यानुरक्तो भगवान् प्रतिनंद्येदमब्रवीत् ॥१३॥

श्रीभगवानुवाच

वेदाहं ते व्यवसितं हृदि राजन्यबालक ।
तत्प्रयच्छामि भद्रं ते दुरापमपि सुव्रत ॥१४॥
नान्यैरधिष्ठितं भद्र यद्भ्राजिष्णु ध्रुवक्षिति ।
यत्र ग्रहर्क्षताराणां ज्योतिषां चक्रमाहितम् ॥१५॥
मेढ्यां गोचक्रवत्स्थास्नु परस्तात्कल्पवासिनाम् ।
धर्मोऽग्निः कश्यपः शुक्रो मुनयो ये वनौकसः ।
चरंति दक्षिणीकृत्य भ्रमंतो यत्सतारकाः ॥१६॥
प्रस्थिते तु वनं पित्रा दत्त्वा गां धर्मसंश्रयः ।
षट्त्रिंशद्वर्षसाहस्रं रक्षिताव्याहतेन्द्रियः ॥१७॥
त्वद्भ्रातर्युत्तमे नष्टे मृगयाया तु तन्मनाः ।
अन्वेषन्ती वनं माता दावाग्नि सा प्रवेक्ष्यति ॥१८॥
दृष्ट्वा मां यज्ञहृदयं यज्ञैः पुष्कलदक्षिणैः ।
भुक्त्वा चेहाशिषः सत्या अंते मां संस्मरिष्यसि ॥१९॥
ततो गंतासि मत्स्थानं सर्वलोकनमस्कृतम् ।
उपरिष्टादृषिभ्यस्त्वं यतो नावर्तते गतः ॥२०॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे नवमाध्याये ध्रुवकृता भगवत्स्तुतिः संपूर्णा ॥

•

## हरिमीडेस्तोत्रम्

स्तोष्ये भक्त्या विष्णुमनादिं जगदादिं यस्मिन्नेतत्संसृतिचक्रं भ्रमतीत्थम् ।
यस्मिन्दृष्टे नश्यति तत्संसृतिचक्रं तं संसारध्वान्तविनाशं हरिमीडे ॥ १ ॥
यस्यैकांशादित्थमशेषं जगदेतत्प्रादुर्भूतं येन पिनद्धं पुनरित्थम् ।
येन व्याप्तं येन विबुद्धं सुखदुःखैस्तं संसार ॥ २ ॥
सर्वज्ञो यो यश्च हि सर्वः सकलो यो यश्चानन्दोऽनन्तगुणो यो गुणधामा ।
यश्चाव्यक्तो व्यस्तसमस्तः सदसद्यन्तं संसार० ॥ ३ ॥
यस्मादन्यन्नास्त्यपि नैवं परमार्थं दृश्यादन्यो निर्विषयज्ञानमयत्वात् ।
ज्ञातृज्ञानज्ञेयविहीनोऽपि सदा ज्ञस्तं संसार० ॥ ४ ॥
आचार्येभ्यो लब्धसुसूक्ष्माऽच्युततत्त्वा वैराग्येणाभ्यासबलाच्चैव द्रढिम्ना ।
भक्त्येकाग्रध्यानपरा यं विदुरीशं तं संसार० ॥ ५ ॥
प्राणानायम्योमिति चित्तं हृदि रुद्ध्वा नान्यत्स्मृत्वा तत्पुनरत्रैव विलाप्य ।
क्षीणे चित्ते भादृशिरस्मीति विदुर्यं तं संसार० ॥ ६ ॥

यं ब्रह्माख्यं देवमनन्यं परिपूर्णं हृत्स्थं भक्तैर्लभ्यमजं सूक्ष्ममतर्क्यम् ।
ध्यात्वाऽऽत्मस्थं ब्रह्मविदो यं विदुरीशं तं संसार० ॥ ७॥
मात्रातीतं स्वात्मविकासात्मविबोधं ज्ञेयातीतं ज्ञानमयं हृद्युपलभ्यम् ।
भावग्राह्यानन्दमनन्यं च विदुर्यं तं संसार० ॥ ८॥
यद्यद्वेद्यं वस्तु सतत्त्वं विषयाख्यं तत्तद्ब्रह्मैवेति विदित्वा तदहं च ।
ध्यायन्त्येवं यं सनकाद्या मुनयोऽजं तं संसार० ॥ ९॥
यद्यद्वेद्यं तत्तदहं नेति विहाय स्वात्मज्योतिर्ज्ञानमयानन्दमवाप्य ।
तस्मिन्नस्मीत्यात्मविदो यं विदुरीशं तं संसार० ॥१०॥
हित्वा हित्वा दृश्यमशेषं सविकल्पं मत्वा शिष्टं भादृशिमात्रं गगनाभम् ।
त्यक्त्वा देहं यं प्रविशन्त्यच्युतभक्तास्तं संसार० ॥११॥
सर्वत्रास्ते सर्वशरीरी न च सर्वः सर्वे वेत्त्येवेह न यं वेत्ति च सर्वः ।
सर्वत्रान्तर्यामितयेत्थं यमनन्यस्तं संसार० ॥१२॥
सर्वं दृष्ट्वा स्वात्मनि युक्त्या जगदेतदृष्ट्वाऽऽत्मानं चैवमजं सर्वजनेषु ।
सर्वात्मैकोऽस्मीति विदुर्यं जहहृत्स्थं तं संसार० ॥१३॥
सर्वत्रैकः पश्यति जिघ्रत्यथ भुङ्क्ते द्रष्टा श्रोता बुध्यति चेत्याहुरिमं यम् ।
साक्षी चास्ते कर्तृषु पश्यन्निति चान्ये तं संसार० ॥१४॥
पश्यञ्शृण्वन्नत्र विजानन् रसयन् सन् जिघ्रन्बिभ्रद्देहमिमं जीवतयेत्थम् ।
इत्यात्मानं यं विदुरीशं विषयज्ञं तं संसार० ॥१५॥
जाग्रद्दृष्ट्वा स्थूलपदार्थानथ मायां दृष्ट्वा स्वप्नेऽथापि सुषुप्तौ सुखनिद्राम् ।
इत्यात्मानं वीक्ष्य मुदास्ते च तुरीये तं संसार० ॥१६॥
पश्यञ्शुद्धोऽप्यक्षर एको गुणभेदान्नानाकारान् स्फाटिकवद्भाति विचित्रः ।
भिन्नश्छिन्नश्चायमजः कर्मफलैर्यस्तं संसार० ॥१७॥
ब्रह्माविष्णू रुद्रहुताशौ रविचन्द्राविन्द्रो वायुर्यज्ञ इतीत्थं परिकल्प्य ।
एकं सन्तं यं बहुधाऽऽहुर्मतिभेदात्तं संसार० ॥१८॥
सत्यं ज्ञानं शुद्धमनन्तं व्यतिरिक्तं शान्तं गूढं निष्कलमानन्दमनन्यम् ।
इत्याहादौ यं वरुणोऽसौ भृगवेऽजं तं संसार० ॥१९॥
कोशानेतान्पञ्चरसादीनतिहाय ब्रह्मास्मीति स्वात्मनि निश्चित्य दृशिस्थः ।
पित्रादिष्टो वेदभृगुर्यं यजुरन्ते तं संसार० ॥२०॥
येनाविष्टो यस्य च शक्त्या यदधीनः क्षेत्रज्ञोऽयं कारयिता जन्तुषु कर्तुः ।
कर्ता भोक्तात्माऽत्र हि चिच्छक्त्यधिरूढस्तं संसार० ॥२१॥
सृष्ट्वा सर्वं स्वात्मतयैवेत्थमतर्क्यं व्याप्याथान्तः कृत्स्नमिदं सृष्टमशेषम् ।
सच्च त्यच्चाभूत् परमात्मा स य एकस्तं संसार० ॥२२॥

वेदांतैश्चाध्यात्मिकशास्त्रैश्च पुराणैः शास्त्रैश्चान्यैः सात्त्वततन्त्रैश्च यमीशम् ।
दृष्ट्वाऽथान्तश्चेतसि बुद्ध्या विविशुर्यं तं संसार० ॥२३॥

श्रद्धाभक्तिध्यानशमाद्यैर्यतमानैर्ज्ञातुं शक्यो देव इहैवाशु य ईशः ।
दुर्विज्ञेयो जन्मशतैश्चापि विना तैस्तं संसार० ॥२४॥

यस्यातर्क्यं स्वात्मविभूतेः परमार्थं सर्वं खल्वित्यत्र निरुक्तं श्रुतिविद्भिः ।
तज्जातित्वादब्धितरंगभ्रमभिन्नं तं संसार० ॥२५॥

दृष्ट्वा गीतास्वक्षरतत्त्वं विधिनाजं भक्त्या गुर्व्यां लभ्य हृदिस्थं दृशिमात्रम् ।
ध्यात्वा तस्मिन्नस्म्यहमित्यत्र विदुर्यं तं संसार० ॥२६॥

क्षेत्रज्ञत्वं प्राप्य विभुः पंचमुखैर्यो भुङ्क्तेऽजस्रं भोग्यपदार्थान्प्रकृतिस्थः ।
क्षेत्रे क्षेत्रेष्विदुवदेको बहुधाऽऽस्ते तं संसार० ॥२७॥

युक्त्यालोड्य व्यासवचांस्यत्र हि लभ्यः क्षेत्रक्षेत्रज्ञांतरविद्भिः पुरुषाख्यः ।
योऽहं सोऽसौ सोऽस्म्यहमेवेति विदुर्यं तं संसार० ॥२८॥

एकीकृत्यानेकशरीरस्थमिमं ज्ञं यं विज्ञायेहैव स एवाशु भवन्ति ।
यस्मिँल्लीना नेह पुनर्जन्म लभन्ते तं संसार० ॥२९॥

द्वंद्वैकत्वं यच्च मधुब्राह्मणवाक्यैः कृत्वा शक्रोपासनमासाद्य विभूत्या ।
योऽसौ सोऽहं सोऽस्म्यहमेवेति विदुर्यं तं संसार० ॥३०॥

योऽयं देहे चेष्टयिताऽन्तःकरणस्थः सूर्ये चासौ तापयिता सोऽस्म्यहमेव ।
इत्यात्मैक्योपासनया यं विदुरिशं तं संसार० ॥३१॥

विज्ञानांशो यस्य सतः शक्त्यधिरूढो बुद्धिर्बुध्यत्यत्र बहिर्बोध्यपदार्थान् ।
नैवांतःस्थं बुध्यति यं बोधयितारं तं संसार० ॥३२॥

कोऽयं देहे देव इतीत्थं सुविचार्य ज्ञाता श्रोतानन्दयिता चैष हि देवः ।
इत्यालोच्य ज्ञांशमिहास्मीति विदुर्यं तं संसार० ॥३३॥

को ह्येवान्यादात्मनि न स्वादयमेष ह्येवानन्दः प्राणिति चापानिति चेति ।
इत्यस्तित्वं वक्त्युपपत्त्या श्रुतिरेषा तं संसार० ॥३४॥

प्राणो वाऽहं वाक्श्रवणादीनि मनो वा बुद्धिर्वाऽहं व्यस्त उताहोऽपि समस्तः ।
इत्यालोच्य ज्ञप्तिरिहास्मीति विदुर्यं तं संसार० ॥३५॥

नाहं प्राणो नैव शरीरं न मनोऽहं नाहं बुद्धिर्नाहमहंकारधियौ च ।
योऽत्र ज्ञांशः सोऽस्म्यहमेवेति विदुर्यं तं संसार० ॥३६॥

सत्तामात्रं केवलविज्ञानमजं सत्सूक्ष्मं नित्यं तत्त्वमसीत्यात्मसुताय ।
साम्नामन्ते प्राह पिता यं विभुमाद्यं तं संसार० ॥३७॥

मूर्तामूर्ते पूर्वमपोह्याथ समाधौ दृश्यं सर्वं नेति च नेतीति विहाय।
चैतन्यांशे स्वात्मनि सन्तं च विदुर्यं तं संसार० ॥३८॥
ओतं प्रोतं यत्र च सर्वं गगनान्तं यो स्थूलानण्वादिषु सिद्धोऽक्षरसंज्ञः।
ज्ञातातोऽन्यो नेत्युपलभ्यो न च वेद्यस्तं संसार० ॥३९॥
तावत्सर्वं सत्यमिवाभाति यदेतद्यावत्सोऽस्मीत्यात्मनि यो ज्ञो न हि दृष्टः।
दृष्टे तस्मिन्सर्वमसत्यं भवतीदं तं संसार० ॥४०॥
रागामुक्तं लोहयुतं हेम यथाऽग्नौ योगाष्टाङ्गैरुज्ज्वलितज्ञानमयाग्नौ।
दग्ध्वात्मानं ज्ञं परिशिष्टं च विदुर्यं तं संसार० ॥४१॥
यं विज्ञानज्योतिषमाद्यं सुविभान्तं हृद्यर्केन्द्वग्न्योकसमीड्यं तडिदाभम्।
भक्त्याराध्येहैव विशंत्यात्मनि सन्तं तं संसार० ॥४२॥
पायाद्भक्तं स्वात्मनि सन्तं पुरुषं यो भक्त्या स्तौतीत्याङ्गिरसं विष्णुरिमं माम्।
इत्यात्मानं स्वात्मनि संहृत्य सदैकस्तं संसार० ॥४३॥
इत्थं स्तोत्रं भक्तजनेड्यं भवभीतिध्वांतार्काभं भगवत्पादीयमिदं यः।
विष्णोर्लोकं पठति शृणोति व्रजति ज्ञो ज्ञानं ज्ञेयं स्वात्मनि चाप्नोति मनुष्यः ॥४४॥

इति श्रीमच्छंकरभगवतः कृतौ हरिमीडेस्तोत्रं समाप्तम् ॥



## विष्णोः षोडशनामस्तोत्रम्

औषधे चिन्तयेद्विष्णुं भोजने च जनार्दनम्।
शयने पद्मनाभं च विवाहे च प्रजापतिम् ॥१॥

युद्धे चक्रधरं देवं प्रवासे च त्रिविक्रमम्।
नारायणं तनुत्यागे श्रीधरं प्रियसंगमे ॥२॥

दुःस्वप्ने स्मर गोविन्दं संकटे मधुसूदनम्।
कानने नारसिंहं च पावके जलशायिनम् ॥३॥

जलमध्ये वराहं च पर्वते रघुनन्दनम्।
गमने वामनं चैव सर्वकार्येषु माधवम् ॥४॥

षोडशैतानि नामानि प्रातरुत्थाय यः पठेत्।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥५॥

इति श्रीविष्णोः षोडशनामस्तोत्रं संपूर्णम् ॥



## विष्णोरष्टाविंशतिनामस्तोत्रम्

अर्जुन उवाच

किं नु नामसहस्राणि जपंते च पुनः पुनः ।
यानि नामानि दिव्यानि तानि चाचक्ष्व केशव ॥१॥

श्रीभगवानुवाच

मत्स्यं कूर्मं वराहं च वामनं च जनार्दनम् ।
गोविंदं पुंडरीकाक्षं माधवं मधुसूदनम् ॥२॥
पद्मनाभं सहस्राक्षं वनमालिं हलायुधम् ।
गोवर्धनं हृषीकेशं वैकुंठं पुरुषोत्तमम् ॥३॥
विश्वरूपं वासुदेवं रामं नारायणं हरिम् ।
दामोदरं श्रीधरं च वेदांगं गरुडध्वजम् ॥४॥
अनंतं कृष्णगोपालं जपतो नास्ति पातकम् ।
गवां कोटिप्रदानस्य अश्वमेधशतस्य च ॥५॥
कन्यादानसहस्राणां फलं प्राप्नोति मानवः ।
अमायां वा पौर्णमास्यामेकादश्यां तथैव च ॥६॥
संध्याकाले स्मरन्नित्यं प्रातःकाले तथैव च ।
मध्याह्ने च जपन्नित्यं सर्वपापैः प्रमुच्यते ॥७॥

इति श्रीकृष्णार्जुनसंवादे विष्णोरष्टाविंशतिनामस्तोत्रं संपूर्णम् ॥

•

## विष्णोरष्टनामस्तोत्रम्

अच्युतं केशवं विष्णुं हरिं सत्यं जनार्दनम् ।
हंसं नारायणं चैवमेतन्नामाष्टकं पठेत् ॥१॥
त्रिसंध्यं यः पठेन्नित्यं दारिद्र्यं तस्य नश्यति ।
शत्रुसैन्यं क्षयं याति दुःस्वप्नः सुखदो भवेत् ॥२॥
गंगायां मरणं चैव दृढा भक्तिस्तु केशवे ।
ब्रह्मविद्याप्रबोधश्च तस्मान्नित्यं पठेन्नरः ॥३॥

इति श्रीवामनपुराणे विष्णोरष्टनामस्तोत्रं संपूर्णम् ॥

•

## पांडुरंगाष्टकम्

महायोगपीठे तटे भीमरथ्या वरं पुंडरीकाय दातुं मुनींद्रैः।
समागत्य निष्ठन्तमानंदकंदं परब्रह्मलिंगं भजे पांडुरंगम् ॥ १ ॥
तडिद्वाससं नीलमेघावभासं रमामंदिरं सुंदरं चित्प्रकाशम्।
वरं त्विष्टिकायां समन्यस्तपादं पर० ॥ २ ॥
प्रमाणं भवाब्धेरिदं मामकानां नितंबः कराभ्यां धृतो येन नस्मात्।
विधातुर्वसत्यै धृतोनाभिकोशः पर० ॥ ३ ॥
स्फुरत्कौस्तुभालंकृतं कंठदेशे श्रिया जुष्टकेयूरकं श्रीनिवासम्।
शिवं शान्तमीडयं वरं लोकपालं पर० ॥ ४ ॥
शरच्चंद्रबिंबाननं चारुहासं लसत्कुंडलाक्रान्तगंडस्थलांगम्।
जपारागबिंबाधरं कंजनेत्रं पर० ॥ ५ ॥
किरीटोज्ज्वलत्सर्वदिक्प्रान्तभागं सुरैरर्चितं दिव्यरत्नैरनर्घ्यैः।
त्रिभंगाकृतिं बर्हमाल्यावतंसं पर० ॥ ६ ॥
विभुं वेणुनादं चरन्तं दुरन्तं स्वयं लीलया गोपवेषं दधानम्।
गवां वृंदकानन्ददं चारुहासं पर० ॥ ७ ॥
अजं रुक्मिणीप्राणसंजीवनं तं परं धाम कैवल्यमेकं तुरीयम्।
प्रसन्नं प्रपन्नार्तिहं देवदेवं परब्रह्मलिंगं भजे पांडुरंगम् ॥ ८ ॥
स्तवं पांडुरंगस्य वै पुण्यदं ये पठन्त्येकचित्तेन भक्त्या च नित्यम्।
भवांभोनिधिं तेऽपि तीर्त्वाऽन्तकाले हरेरालयं शाश्वतं प्राप्नुवन्ति ॥ ९ ॥

इति श्रीमच्छङ्करभगवतः कृतौ पाण्डुरङ्गाष्टकम् ॥

•

## आपदुद्धारकश्रीरामस्तोत्रम्

अस्य श्रीआपदुद्धारकस्तोत्रस्य वसिष्ठो भगवान् ऋषिः अनुष्टुप्छन्दः श्रीरामचन्द्रो देवता श्रीं बीजं रां शक्तिः मं कीलकं ममापदुद्धारकश्रीरामचन्द्र-प्रसादसिद्ध्यर्थे जपे विनियोगः। आपदामपहर्तारम् अङ्गुष्ठाभ्यां नमः। दातारं सर्वसम्पदां तर्जनीभ्यां नमः। लोकाभिरामं मध्यमाभ्यां नमः। श्रीरामम् अनामिकाभ्यां नमः। भूयो भूयः कनिष्ठिकाभ्यां नमः। नमाम्यहं करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। भूर्भुवस्स्वरोमिति दिग्बन्धः। ध्यानम्।

आर्तानामार्तिहन्तारं भीतानां भयनाशनम् ।
द्विषतां कालदण्डं च रामचन्द्रं नमाम्यहम् ॥१॥

चापं दधानः स्तनयित्नुघोषं कर्षन्निषङ्गादिषुमार्तिविघ्नम् ।
आपत्सु भूयादभयप्रदो मे साकं सुमित्रातनयेन रामः ॥२॥

मनुरुवाच

आपदामपहर्तारं दातारं सर्वसम्पदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥३॥

आपन्नजनरक्षैकदक्षायामिततेजसे ।
नमोस्तु विष्णवे तुभ्यं रामायापन्निवारिणे । आपदा० ॥४॥

पदाम्भोजरजस्पर्शपवित्रमुनियोषिते ।
नमोस्तु सीतापतये रामायापन्निवारिणे । आपदा० ॥५॥

दानवेन्द्रमहामत्तगजपञ्चास्यरूपिणे ।
नमोस्तु रघुनाथाय रामायापन्निवारिणे । आपदा० ॥६॥

महीजाकुचसंलग्नकुङ्कुमारुणवक्षसे ।
नमः कल्याणरूपाय रामायापन्निवारिणे । आपदा० ॥७॥

पद्मसम्भवभूतेशमुनिसंस्तुतकीर्तये ।
नमो मार्तण्डवंश्याय रामायापन्निवारिणे । आपदा० ॥८॥

हरत्यार्तिञ्च लोकानां यो वा मधुनिषूदनः ।
नमोस्तु हरये तुभ्यं रामायापन्निवारिणे । आपवा० ॥९॥

तापकारणसंसारगजसिंहस्वरूपिणे ।
नमो वेदान्तवेद्याय रामायापन्निवारिणे । आपदा० ॥१०॥

रङ्गत्तरङ्गजलधिगर्वहृच्छरधारिणे ।
नमः प्रतापरूपाय रामायापन्निवारिणे । आपदा० ॥११॥

दारासहितचन्द्रावतंसध्यातस्वमूर्तये ।
नमस्सत्त्वस्वरूपाय रामायापन्निवारिणे । आपदा० ॥१२॥

तारानायकसङ्काशवदनाय महौजसे ।
नमोस्तु ताटकाहन्त्रे रामायापन्निवारिणे । आपदा० ॥१३॥

रम्यसानुलसच्चित्रकूटाश्रमविहारिणे ।
नमस्सौमित्रिसेव्याय रामायपन्निवारिणे । आपदा० ॥१४॥

सर्वदेवहितासक्तदशाननविनाशिने ।
नमः कलुषसंहर्त्रे रामायापन्निवारिणे । आपदा० ॥१५॥

रत्नसानुनिवासैकवन्द्यपादाम्बुजाय च ।
नमस्त्रैलोक्यनाथाय रामायापन्निवारिणे । आपदा० ॥१६॥
संसारबन्धमोक्षैकहेतुनामप्रकाशिने ।
नमः कलुषसंहर्त्रे रामायापन्निवारिणे । आपदा० ॥१७॥
पवनाशुगसंक्षिप्तमारीचादिसुरारये ।
नमो मखप्रतिष्ठात्रे रामायापन्निवारिणे । आपदा० ॥१८॥
दाम्भिकेतरभक्तौघमहदानन्ददायिने ।
नमः कमलनेत्राय रामायापन्निवारिणे । आपदा० ॥१९॥
लोकत्रयोद्वेगकरकुम्भकर्णशिरश्छिदे ।
नमो भीषणरूपाय रामायापन्निवारिणे । आपदा० ॥२०॥
काकासुरैकनयनहरल्लीलास्त्रधारिणे ।
नमो भक्तैकवन्द्याय रामायापन्निवारिणे । आपदा० ॥२१॥
भिक्षुरूपसमाक्रान्तबलिवीर्यैकसम्पदे ।
नमो वामनरूपाय रामायापन्निवारिणे । आपदा० ॥२२॥
राजीवनेत्रसुस्पन्दरुचिराङ्गसुरोचिषे ।
नमः कैवल्यनिधये रामायापन्निवारिणे । आपदा० ॥२३॥
मन्दमारुतसंवीतमन्दारमृदुवासने ।
नमः पल्लवहस्ताय रामायापन्निवारिणे । आपदा० ॥२४॥
श्रीकण्ठचापदलनधुरीणबलबाहवे ।
नमस्सीतानुषक्ताय रामायापन्निवारिणे । आपदा० ॥२५॥
राजराजसुहृद्योषार्चितमङ्गलमूर्त्तये ।
नम इक्ष्वाकुवंश्याय रामायापन्निवारिणे । आपदा० ॥२६॥
मञ्जुलादर्पविषयोक्षणैकैकविलासिने ।
नमः पोषितभक्ताय रामायापन्निवारिणे । आपदा० ॥२७॥
भूरिभूधरकोदण्डमूर्तिज्ञेयस्वरूपिणे ।
नमः प्रतापरूपाय रामायापन्निवारिणे । आपदा० ॥२८॥
योगीन्द्रहृत्सरोजातमधुपाय महात्मने ।
नमो राजाधिराजाय रामायापन्निवारिणे । आपदा० ॥२९॥
भूवराहस्वरूपाय नमो भुरिप्रदायिने ।
नमः कोमलदेहाय रामायापन्निवारिणे । आपदा० ॥३०॥

योषाञ्जलिविनिर्मुक्त लाजाचितवपुष्मते ।
नमस्सौन्दर्यनिधये रामायापन्निवारिणे । आपदा० ॥३१॥
नखटोटिविनिभिन्नदैत्याधिपतिवक्षसे ।
नमो नृसिंहरूपाय रामायापन्निवारिणे । आपदा० ॥३२॥
मायामानुषदेहाय वेदोद्धारणहेतवे ।
नमोस्तु मत्स्यरूपाय रामायापन्निवारिणे । आपदा० ॥३३॥
मितिशून्यमहादिव्यमहिम्ने मानितात्मने ।
नमो ब्रह्मस्वरूपाय रामायापन्निवारिणे । आपदा० ॥३४॥
अहङ्कारेतरजनस्वान्तसौधविहारिणे ।
नमोस्तु चित्स्वरूपाय रामायापन्निवारिणे । आपदा० ॥३५॥
सीतालक्ष्मणसंशोभिपार्श्वाय परमात्मने ।
नमः पट्टाभिषिक्ताय रामायापन्निवारिणे । आपदा० ॥३६॥

फलश्रुति

इमं स्तवं भगवतः पठेद्यः प्रीतिमानसः ।
प्रभाते वा प्रदोषे वा रामस्य परमात्मनः ॥३७॥
स तु तीर्त्वा भवाम्भोधिमापदस्सकला अपि ।
रामसायुज्यमाप्नोति देवदेवप्रसादतः ॥३८॥
कारागृहादिबाधासु संप्राप्ते बहुसंकटे ।
आपन्निवारकं स्तोत्रं पठेद्यस्तु यथाविधि ॥३९॥
संयोज्यानुष्टुभं मत्रं मनुश्लोकं स्मरन् विभुम् ।
सप्ताहं सर्वबाधाभ्यो मुच्यते नात्र संशयः ॥४०॥
द्वात्रिंशद्वारजपतः प्रत्यहं सुदृढव्रतः ।
वैशाखे भानुमालोक्य प्रत्यहं शतसंख्यया ॥४१॥
धनेन धनदप्रख्यां लभते नात्र संशयः ।
बहुनात्र किमुक्तेन यं यं कामयते नरः ॥४२॥
तं तं काममवाप्नोति स्तोत्रेणानेन मानवः ।
यन्त्रपूजाविधानेन जपहोमादितर्पणैः ॥४३॥
यस्तु कुर्वीत सहसा सर्वान्कामानवाप्नुयात् ।
इह लोके सुखी भूत्वा परे मुक्तो भविष्यति ॥४४॥
आपदामपहर्तारं दातारं सर्वसंपदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥४५॥

इत्यगस्त्यसंहितायामुमामहेश्वरसंवादे आपदुद्धारकस्तोत्रं सम्पूर्णम् ॥

# अनामयस्तोत्रम्

तृष्णातन्त्रे मनसि तमसा दुर्दिने बन्धुवर्ती
मादृग्जन्तुः कथमधिकरोत्यैश्वरं ज्योतिरग्र्यम् ।
वाचः स्फीता भगवति हरेस्सन्निकृष्टात्मरूपा-
स्स्तुत्यात्मानस्स्वयमिवमुखादस्य मे निष्पतन्ति ॥१॥

वेधा विष्णुर्वरुणधनदौ वासवो जीवितेश-
श्चन्द्रादित्ये वसव इति या देवता भिन्नकक्ष्या ।
मन्ये तासामपि न भजते भारती ते स्वरूपं
स्थूले त्वंशे स्पृशति सदृशं तत्पुनर्मादृशोऽपि ॥२॥

तन्नस्स्थाणोस्स्तुतिरतिभरा भक्तिरुच्चैर्मुखी चेद्
ग्राम्यस्तोता भवति पुरुषः कश्चिदारण्यको वा ।
नो चेद्भक्तिस्त्वयि च यदि वा ब्रह्मविद्यात्वधीते
नानुध्येयस्तव पशुरसावात्मकर्मानभिज्ञः ॥३॥

विश्वं प्रादुर्भवति लभते त्वामधिष्ठायकं चेत्
नेहोत्पत्तिर्यदि जनयिता नास्ति चैतन्ययुक्तः ।
क्षित्यादीनां भव निजकलावत्तया जन्मवत्ता
सिध्यत्येवं सति भगवतस्सर्वलोकाधिपत्यम् ॥४॥

भोग्यामाहुः प्रकृतिमृषयश्चेतनाशक्तिशून्यां
भोक्ता चैनां परिणमयितुं बुद्धिवर्ती समर्थः ।
भोगोप्यस्मिन् भवति मिथुने पुष्कलस्तत्र हेतुः
नीलग्रीव त्वमसि भुवनस्थापनासूत्रधारः ॥५॥

भिन्नावस्थं जगति बहुना देशकालप्रभेदाद्
द्वाभ्यां पापान्यभिगिरि हरन् योनवद्य क्रमाभ्याम् ।
प्रेक्ष्यारूढस्सृजति नियमादस्य सर्वं हि यत्तत्
सर्वज्ञत्वं त्रिभुवन सृजा यत्र सूत्रं न किञ्चित् ॥६॥

चारूद्रेके रजसि जगतां जन्मसत्वे प्रकृष्टे
यात्रां भूयस्तमसि बहुले बिभ्रतस्संहृतिं च ।
ब्रह्माद्यैतत्प्रकृतिगहनं स्तम्भपर्यन्तमासीत्
क्रीडावस्तु त्रिनयन मनोवृत्तिमात्रानुगं ते ॥७॥

कृत्तिश्चित्रा निवसनपदे कल्पिता पौण्डरीकी
वासागारं पितृवनभुवं वाहनं कश्चिदुक्षा ।
एवं प्राहुः प्रलघुहृदया यद्यपि स्वार्थपोषं
त्वां प्रत्येकं ध्वनति भगवन्नीश इत्येष शब्दः ॥८॥

क्लृप्ताकल्पः किमयमशिवैरस्थिमुख्यैः पदार्थैः
कस्स्यादस्य स्तनकलशयोर्भारनम्रा भवानी ।
बाणौ खड्गः परशुरिदमप्यक्षसूत्रं किमस्येत्
या चक्षाणो हर कृतधियामस्तु हास्यैकवेद्यः ॥९॥

यत्कापालव्रतमपि महद् पृष्टमेकान्तघोरं
मुक्तेरध्वा स पुनरमलः पावनः किं न जातः ।
दाक्षायण्यां प्रियतमतया वर्तते योगमाया
सा स्याद्धत्ते मिथुनचरितं वृद्धिमूलं प्रजानाम् ॥१०॥

कश्चिन्मर्त्यः क्रतुकृशतनुर्नीलकण्ठ त्वया चेद्
दृष्टिस्निग्धस्स पुनरमरस्त्रीभुजग्राह्यकण्ठः ।
अप्यारूढस्सुरपरिवृतं स्थानमाखण्डलीयं
त्वं चेत्क्रुद्धस्स पतति निरालम्बनो ध्वान्तजाले ॥११॥

शश्वद्बाल्यं शरवणभवं षण्मुखं द्वादशाक्षं
तेजो यत्ते कनकनलिनीपद्मपत्रावदातम् ।
विस्मार्यन्ते सुरयुवतयस्तेन सेन्द्रावरोधा
दैत्येन्द्राणामसुरजयिनां बन्धनागारवासम् ॥१२॥

वेगाकृष्टग्रहरविशशिव्यश्नुवानं दिगन्तात्
न्यक्कुर्वाणं प्रलयपयसामूर्मिभङ्गावलेपम् ।
मुक्ताकारं हर तव जटाबद्धसंस्पर्शि सद्यो
जज्ञे चूडाकुसुमसुभगं वारि भागीरथीयम् ॥१३॥

कल्माषस्ते मरकतशिलाभङ्गकान्तिर्न कण्ठे
न व्याचष्टे भुवनविषयीं त्वत्प्रसादप्रवृत्तिम् ।
वारां गर्भस्य हि विषमयो मण्दरक्षोभजन्मा
नैवं रुद्धो यदि न भवति स्थावरं जङ्गमं वा ॥१४॥

सन्धायास्त्रं धनुषि नियमोन्माथि सम्मोहनाख्यं
पार्श्वे तिष्ठन् गिरिशसदृशे पञ्चबाणो मुहूर्तम् ।
तस्मादूर्ध्वं दहनपरिधौ रोषदृष्टिप्रसूते
रक्ताशोकस्तवकित इव प्रान्तधूमद्विरेफः ॥१५॥

लङ्कानाथं लवणजलधिस्थूलवेलोर्मिदीर्घैः
कैलासं ते निलयनगरीं बाहुभिः कम्पयन्तम् ।
आक्रोशद्भिर्वमितरुधिरैराननैराप्लुताक्षै-
रापातालानयदलसाबद्धमङ्गुष्ठकर्म ॥१६॥

ऐश्वर्यं तेऽप्यनृणतपतन्नेकमूर्धावशेषः
पादद्वन्द्वं दशमुखशिरः पुण्डरीकोपहारः ।
येनैवासावधिगतफलो राक्षसश्रीविधेय-
श्चक्रे देवासुरपरिषदो लोकपालैकशत्रुः ॥१७॥

भक्तिर्बाणासुरमपि भवत्पादपद्म स्पृशन्तं
स्थानं चन्द्राभरण गमयामास लोकस्य मूर्ध्नि ।
नह्यस्यापि भ्रुकुटिनयनादग्निदंष्ट्राकरालं
द्रष्टुं कश्चिद्वदनमशकद्देवदैत्येश्वरेषु ॥१८॥

पादन्यासान्नमति वसुधा पन्नगस्कन्धलग्ना
बाहुक्षेपाद् ग्रहगणयुतं घूर्णते मेघवृन्दम् ।
उत्साद्यन्तो क्षणमिव दिशो हुङ्कृतेनातिमात्रं
भिन्नावस्थं भवति भुवनं त्वय्युपक्रान्तवृत्ते ॥१९॥

नोर्ध्वं गम्यं सरसिजभुवो नाप्यधश्शार्ङ्गपाणे-
रासीदन्यस्तव हुतवहस्तम्भमूर्त्या स्थितस्य ।
भूयस्ताभ्यामुपरि लघुना विस्मयेन स्तुवद्भ्यां
कण्ठे कालं कपिलनयनं रूपमाविर्बभूव ॥२०॥

श्लाघ्यां दृष्टिं दुहितरि गिरेर्न्यस्य चापोर्ध्वकोट्यां
कृत्वा बाहुं त्रिपुरविजयानन्तरं ते स्थितस्य ।
मन्दाराणां मधुरसुरभयो वृष्टयः पेतुरार्द्राः
स्वर्गोद्यानभ्रमरवनितादत्तदीर्घानुयाताः ॥२१॥

उद्धृत्यैकं नयनमरुणं स्निग्धतारापरागं
पूर्णेधाद्यः परमसुलभे दुष्कराणां सहस्रे ।
चक्रं भेजे दहनजटिलं दक्षिणं तस्य हस्तं
बालस्येव द्युतिवलयितं मण्डल भास्करस्य ॥२२॥
विष्णुश्चक्रे करतलगते विष्टपानां त्रयाणां
दत्ताश्वासो दनुसुतशिरश्छेददीक्षां बबन्ध ।
प्रत्यासन्नं तदपि नयनं पुण्डरीकानुकारि
श्लाघ्या भक्तिस्त्रिनयन भवत्यर्पिता किं न सूते ॥२३॥
सव्ये शूलं त्रिशिखरमपरे दोष्णि भिक्षाकपालं
सोमो मुग्धश्शिरसि भुजगः कश्चिदंशोत्तरीयः ।
कोऽयं वेषस्त्रिनयन कुतो दृष्ट इत्यद्रिकन्या
प्रायेण त्वां हसति भगवन् प्रेमनिर्यंत्रितात्मा ॥२४॥
आर्द्रं नागाजिनमवयवग्रन्थिमद्बिभ्रदंसे
रूपं प्रावृड्घनरुचिमहाभैरवं दर्शयित्वा ।
पश्यन् गौरीं भयचलकरालम्बितस्कन्धहस्तां
मन्ये प्रीत्या दृढ इति भवान् वज्रदेहेऽपि जातः ॥२५॥
व्यालाकल्पा विषमनयना विद्रुमाताम्रभासो
जायामिश्रा जटिलशिरश्चन्द्ररेखावतंसाः ।
नित्यानन्दा नियतललिताः स्निग्धकल्माषकण्ठाः
देवा रुद्रा धृतपरशवस्ते भविष्यन्ति भक्ताः ॥२६॥
मन्त्राभ्यासो नियमविधयस्तीर्थयात्रानुरोधो
ग्रामे भिक्षाचरणमुटजे बीजवृत्तिर्वने वा ।
इत्यायासे महति रमतामप्रगल्भः फलार्थे
स्मृत्येवाहं तवचरणयोर्निर्वृतिं साधयामि ॥२७॥
आस्तां तावत्स्नपनमुपरिक्षीरधाराप्रवाहैः
स्नेहाभ्यङ्गो भवनकरणं गन्धपुष्पार्पणं वा ।
यस्ते कश्चित्किरति कुसुमान्युद्दिशन् पादपीठं
भूयो नैव भ्रमति जननीगर्भकारागृहेषु ॥२८॥
शुक्ताकारं मुनिभिरनिशं चेतसि ध्यायमानं
मुक्तागौरं शिरसिजटिले जाह्नवीमुद्वहन्तम् ।
नानाकारं नवशशिकलाशेखरं नागहारं
नारीमिश्रं धृतनरशिरोमाल्यमीशं नमामि ॥२९॥

तिर्यग्योनौ त्रिदशनिलये मानुषे राक्षसे वा
यक्षावासे विषधरपुरे देव विद्याधरे वा ।
यस्मिन् कस्मिन्सुकृतनिलये जन्मनि श्रेयसो वा
भूयाद्युष्मच्चरणकमलध्यायिनी चित्तवृत्तिः ॥३०॥

वन्दे रुद्रं वरदममलं दण्डिनं मुण्डधारिं
दिव्यज्ञानं त्रिपुरदहनं शङ्करं शूलपाणिम् ।
तेजोराशिं त्रिभुवनगुरुं तीर्थमौलिं त्रिनेत्रं
कैलासस्थं धनपतिसखं पार्वतीनाथमीशम् ॥३१॥

योगी भोगी विषभुगमृतभुक् शस्त्रपाणिस्तपस्वी
शान्तः क्रूरः शमितविषयः शैलकन्यासहायः ।
भिक्षावृत्तिस्त्रिभुवनपतिः शुद्धिमानस्थिमाली
शक्यो ज्ञातुं कथमिव शिव त्वं विरुद्धस्वभावः ॥३२॥

उपदिशति यदुच्चैर्ज्योतिराम्नायविद्यां
परम परमदूरं दूरमाद्यन्तशून्याम् ।
त्रिपुरजयिनी तस्मिन् देवेदेवे निविष्टां
भगवति परिवर्तोन्मादिनी भक्तिरस्तु ॥३३॥

इति विरचितमेतच्चारुचन्द्रार्धमौले-
र्ललितपदमुदारं दण्डिना पण्डितेन ।
स्तवनमवनकामेनात्मनोऽनामयाख्यं
भवति विगतरोगी जन्तुरेतज्जपेन ॥३४॥

स्तोत्रं सम्यक्परमविदुषा दण्डिनां वाच्यवृत्तान्
मन्दाक्रान्तान् त्रिभुवनगुरोः पार्वतीवल्लभस्य ।
कृत्वा स्तोत्रं यदि सुभगमाप्नोति नित्यं हि पुण्यं
तेन व्याधिं हर हर नृणां स्तोत्रपाठेन सत्यम् ॥३५॥

इति दण्डिविरचितमनामयस्तोत्रं सम्पूर्णम् ॥

•

( यह शिवस्तोत्र भूल से क्रम बदलकर यहाँ छापा गया है । इसे शिव-स्तोत्रों के साथ होना चाहिए था । )

# रामरक्षास्तोत्रम्

अस्य श्रीरामरक्षास्तोत्रमंत्रस्य बुधकौशिक ऋषिः। श्रीसीतारामचंद्रो देवता। अनुष्टुप् छंदः। सीता शक्तिः। श्रीमद्धनुमान् कीलकम्। श्रीरामचंद्रप्रीत्यर्थे रामरक्षास्तोत्रजपे विनियोगः।

अथ ध्यानम्

ध्यायेदाजानुबाहुं धृतशरधनुषं बद्धपद्मासनस्थं
पीतं वासो वसानं नवकमलदलस्पर्धिनेत्रं प्रसन्नम्।
वामांकारूढसीतामुखकमलमिलल्लोचनं नीरदाभं
नानालंकारदीप्तं दधतमुरुजटामंडलं रामचंद्रम्॥

इति ध्यानम्

चरितं रघुनाथस्य शतकोटिप्रविस्तरम्।
एकैकमक्षरं पुंसां महापातकनाशनम्॥१॥

ध्यात्वा नीलोत्पलश्यामं रामं राजीवलोचनम्।
जानकीलक्ष्मणोपेतं जटामुकुटमंडितम्॥२॥

सासितूणधनुर्बाणपाणिं नक्तंचरांतकम्।
स्वलीलया जगत्त्रातुमाविर्भूतमजं विभुम्॥३॥

रामरक्षां पठेत्प्राज्ञः पापघ्नीं सर्वकामदाम्।
शिरो मे राघवः पातु भालं दशरथात्मजः॥४॥

कौसल्येयो दृशौ पातु विश्वामित्रप्रियः श्रुती।
घ्राणं पातु मखत्राता मुखं सौमित्रिवत्सलः॥५॥

जिह्वां विद्यानिधिः पातु कंठं भरतवंदितः।
स्कंधौ दिव्यायुधः पातु भुजौ भग्नेशकार्मुकः॥६॥

करौ सीतापतिः पातु हृदयं जामदग्न्यजित्।
मध्यं पातु खरध्वंसी नाभिं जांबवदाश्रयः॥७॥

सुग्रीवेशः कटी पातु सक्थिनी हनुमत्प्रभुः।
ऊरू रघूत्तमः पातु रक्षःकुलविनाशकृत्॥८॥

जानुनी सेतुकृत्पातु जंघे दशमुखांतकः।
पादौ विभीषणश्रीदः पातु रामोऽखिलं वपुः॥९॥

एतां रामबलोपेतां रक्षां यः सुकृती पठेत्।
स चिरायुः सुखी पुत्री विजयी विनयी भवेत्॥१०॥

पातालभूतलव्योमचारिणश्छद्मचारिणः ।
न द्रष्टुमपि शक्तास्ते रक्षितं रामनामभिः ॥११॥

रामेति रामभद्रेति रामचंद्रेति वा स्मरन् ।
नरो न लिप्यते पापैर्भुक्तिं मुक्तिं च विंदति ॥१२॥

जगज्जैत्रैकमंत्रेण रामनाम्नाऽभिरक्षितम् ।
यः कंठे धारयेत्तस्य करस्थाः सर्वसिद्धयः ॥१३॥

वज्रपंजरनामेदं यो रामकवचं स्मरेत् ।
अव्याहताज्ञः सर्वत्र लभते जयमंगलम् ॥१४॥

आदिष्टवान्यथा स्वप्ने रामरक्षामिमां हरः ।
तथा लिखितवान्प्रातः प्रबुद्धो बुधकौशिकः ॥१५॥

आरामः कल्पवृक्षाणां विरामः सकलापदाम् ।
अभिरामस्त्रिलोकानां रामः श्रीमान्स नः प्रभुः ॥१६॥

तरुणौ रूपसंपन्नौ सुकुमारौ महाबलौ ।
पुंडरीकविशालाक्षौ चीरकृष्णाजिनांबरौ ॥१७॥

फलमूलाशिनौ दांतौ तापसौ ब्रह्मचारिणौ ।
पुत्रौ दशरथस्यैतौ भ्रातरौ रामलक्ष्मणौ ॥१८॥

शरण्यौ सर्वसत्त्वानां श्रेष्ठौ सर्वधनुष्मताम् ।
रक्षःकुलनिहंतारौ त्रायेतां नो रघूत्तमौ ॥१९॥

आत्तसज्जधनुषाविषुस्पृशावक्षयाशुगनिषंगसंगिनौ ।
रक्षणाय मम रामलक्ष्मणावग्रतः पथि सदैव गच्छताम् ॥२०॥

सन्नद्धः कवची खड्गी चापबाणधरो युवा ।
गच्छन्मनोऽरथोऽस्माकं रामः पातु सलक्ष्मणः ॥२१॥

रामो दाशरथिः शूरो लक्ष्मणानुचरो बली ।
काकुत्स्थः पुरुषः पूर्णः कौसल्येयो रघूत्तमः ॥२२॥

वेदांतवेद्यो यज्ञेशः पुराणपुरुषोत्तमः ।
जानकीवल्लभः श्रीमानप्रमेयपराक्रमः ॥२३॥

इत्येतानि जपेन्नित्यं मद्भक्तः श्रद्धयान्वितः ।
अश्वमेधाधिकं पुण्यं संप्राप्नोति न संशयः ॥२४॥

रामं दूर्वादलश्यामं पद्माक्षं पीतवाससम् ।
स्तुवंति नामभिर्दिव्यैर्न ते संसारिणो नरः ॥२५॥

रामं लक्ष्मणपूर्वजं रघुवरं सीतापतिं सुंदरं ।
काकुत्स्थं करुणार्णवं गुणनिधिं विप्रप्रियं धार्मिकम् ।
राजेंद्रं सत्यसंधं दशरथतनयं श्यामलं शांतमूर्तिं
वंदे लोकाभिरामं रघुकुलतिलकं राघवं रावणारिम् ॥२६॥
रामाय रामभद्राय रामचंद्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥२७॥
श्रीराम राम रघुनंदन राम राम श्रीराम राम भरताग्रज राम राम ।
श्रीराम राम रणकर्कश राम राम श्रीराम राम शरणं भव राम राम ॥२८॥
श्रीरामचंद्रचरणौ मनसा स्मरामि श्रीरामचंद्रचरणौ वचसा गृणामि ।
श्रीरामचंद्रचरणौ शिरसा नमामि श्रीरामचंद्रचरणौ शरणं प्रपद्ये ॥२९॥
माता रामो मत्पिता रामचंद्रः स्वामी रामो मत्सखा रामचंद्रः ।
सर्वस्वं मे रामचंद्रो दयालुर्नान्यं जाने नैव जाने न जाने ॥३०॥
दक्षिणे लक्ष्मणो यस्य वामे च जनकात्मजा ।
पुरतो मारुतिर्यस्य तं वंदे रघुनंदनम् ॥३१॥
लोकाभिरामं रणरंगधीरं राजीवनेत्रं रघुवंशनाथम् ।
कारुण्यरूपं करुणाकरं तं श्रीरामचंद्रं शरणं प्रपद्ये ॥३२॥
मनोजवं मारुततुल्यवेगं जितेंद्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये ॥३३॥
कूजंतं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वंदे वाल्मीकिकोकिलम् ॥३४॥
आपदामपहर्तारं दातारं सर्वसंपदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥३५॥
भर्जनं भवबीजानामर्जनं सुखसंपदाम् ।
तर्जनं यमदूतानां रामरामेति गर्जनम् ॥३६॥
रामो राजमणिः सदा विजयते रामं रमेशं भजे
रामेणाभिहता निशाचरचमू रामाय तस्मै नमः ।
रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं
रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर ॥३७॥
राम रामेति रामेति रमे रामे मनोरमे ।
सहस्रनाम तत्तुल्यं रामनाम वरानने ॥३८॥

इति श्रीबुधकौशिकविरचितं रामरक्षास्तोत्रं संपूर्णम् ॥

•

# * देवीस्तोत्राणि *

## देव्यथर्वशीर्षम्

ॐ सर्वे वै देवा देवीमुपतस्थुः कासि त्वं महादेवीति साऽब्रवीदहं ब्रह्मस्वरूपिणी । मत्तः प्रकृतिपुरुषात्मकं जगत् । शून्यं चा शून्यं च । अहमानंदानानंदौ । अहं विज्ञानाविज्ञाने । अहं ब्रह्माब्रह्मणी । द्वे ब्रह्मणी वेदितव्ये । इति चाथर्वणी श्रुतिः । अहं पंचभूतानि । अहं पंचतन्मात्राणि । अहमखिलं जगत् । वेदोऽहमवेदोऽहम् । विद्याहमविद्याहम् । अजाहमनजाहम् । अधश्चोर्ध्वं च तिर्यक्चाहम् । अहँ रुद्रेभिर्वसुभिश्चरामि । अहमादित्यैरुत विश्वदेवैः । अहं मित्रावरुणावुभौ बिभर्मि अहमिन्द्राग्नी अहमश्विना उभौ । अहँ सोमं त्वष्टारं भगं दधामि । अहं विष्णुमुरुक्रमम् । ब्रह्माणमुत प्रजापतिं दधामि । अहं दधामि द्रविणँ हविष्मते सुप्राव्ये यजमानाय सुव्रते । अहँ राज्ञी संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् । अहँ सुवे पितरमस्य मूर्धन्मम योनिरप्स्वंतः समुद्रे । य एवं वेद स दैवीँ संपदमाप्नोति । ते देवा अब्रुवन् । नमो देव्यै महादेव्यै शिवायै सततं नमः । नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् । तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् । दुर्गां देवीं शरणं प्रपद्यामहेऽसुरान्नाशयित्र्यै ते नमः । देवीं वाचमजनयंत देवास्तां विश्वरूपाः पशवो वदंति । सा नो मंद्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु ॥ कालरात्रीं ब्रह्मस्तुतां वैष्णवीं स्कंदमातरम् । सरस्वतीमदितिं दक्षदुहितरं नमामः पावनां शिवाम् । महालक्ष्म्यै च विद्महे सर्वशक्त्यै च धीमहि । तन्नो देवी प्रचोदयात् । अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव । तां देवा अन्वजायंत भद्रा अमृतबंधवः ॥ कामे योनिः कमला वज्रपाणिर्गुहा हंसा मातलिश्चाभ्रमिंद्रः । पुनर्गुहा सकला मायया चापृथक् क्लेशा विश्वमातादिविद्याः ॥ एषात्मशक्तिः । एषा विश्वमोहिनी पाशांकुशधनुर्बाणधरा । एषा श्रीमहाविद्या । य एवं वेद स शोकं तरति । नमस्ते भगवति मातरस्मान्पाहि सर्वतः । सैषा वैष्णव्यष्टौ वसवः, सैवैकादश रुद्राः, सैषा द्वादशादित्याः; सैषा विश्वेदेवाः सोमपा असोमपाश्च, सैषा यातुधाना असुरा रक्षांसि पिशाचयक्षसिद्धाः । सैषा सत्त्वरजस्तमांसि, सैषा ब्रह्मविष्णुरुद्ररूपिणी, सैषा प्रजापतींद्रमनवः, सैषा ग्रहनक्षत्रज्योतिःकलाकाष्ठादिविश्वरूपिणी, तामहं प्रणौमि नित्यम् । पापापहारिणीं देवीं भुक्तिमुक्तिप्रदायिनीम् । अनंतां विजयां

शुद्धां शरण्यां सर्वदां शिवाम्। वियदाकारसंयुक्तं वीतिहोत्रसमन्वितम्। अर्धेन्दुलसितं देव्या बीजं सर्वार्थसाधकम्। एवमेकाक्षरं मंत्रं यतयः शुद्धचेतसः। ध्यायंति परमानंदमया ज्ञानांबुराशयः। वाङ्मया ब्रह्मभूस्तस्मात्षष्ठवक्त्रसमन्वितम्। सूर्योवामश्रोत्रबिंदुसंयुक्ताष्टतृतीयकम्। नारायणेन संमिश्रो वायुश्चाधारयुक्ततः। विच्चेनवार्णकोणस्य महानानंददायकः। हृत्पुंडरीकमध्यस्था प्रातःसूर्यसमप्रभाम्। पाशांकुशधरां सौम्यां वरदाभयहस्तकाम्। त्रिनेत्रां रक्तवसनां भक्तकामदुहं भजे। भजामि त्वां महादेवि महाभयविनाशिनि। महादारिद्र्यशमनि महाकारुण्यरूपिणि। यस्याः स्वरूपं ब्रह्मादयो न जानन्ति तस्मादुच्यते अज्ञेया। यस्या अंतो न लभ्यते तस्मादुच्यते अनंता। यस्या लक्षं नोपलक्ष्यते तस्मादुच्यते अलक्षा। यस्या जननं नोपलक्ष्यते तस्मादुच्यते अजा। एकैव सर्वत्र वर्तते तस्मादुच्यत एका। एकैव विश्वरूपिणी तस्मादुच्यतेऽनेका। अत एवोच्यतेऽज्ञेयाऽनंताऽलक्ष्याऽजैकानेका। मंत्राणां मातृका देवी शब्दानां ज्ञानरूपिणी। ज्ञानानां चिन्मयातीता शून्यानां शून्यसाक्षिणी। यस्याः परतरं नास्ति सैषा दुर्गा प्रकीर्तिता। तां दुर्गां दुर्गमां देवीं दुराचारविघातिनीम्। नमामि भवभीतोऽहं संसारार्णवतारिणीम्। इदमथर्वशीर्षं योऽधीते। स पचाथर्वशीर्षफलमाप्नोति। इदमथर्वशीर्षं ज्ञात्वा योऽर्चां ँ स्थापयति। शतलक्षं प्रजप्तापि नार्चाशुद्धिं च विन्दति। शतमष्टोत्तरं चास्य पुरश्चर्याविधिः स्मृतः। दशवारं पठेद्यस्तु सद्यः पापैः प्रमुच्यते। महादुर्गाणि तरति महादेव्याः प्रसादतः। सायमधीसानो दिवसकृतं पाप नाशयति। प्रातरधीयानो रात्रिकृत पापं नाशयति। सायंप्रातः प्रयुंजानोऽपापो भवति। निशीथे तुरीयसंध्यायां जप्त्वा वाक्सिद्धिर्भवति। नूतनायां प्रतिमायां जप्त्वा देवतासांनिध्यं भवति। भौमाश्विन्यां महादेवीसंनिधौ जप्त्वा महामृत्युं तरति स महामृत्युं तरति। य एवं वेद। इत्युपनिषत्।

।। इति देव्यथर्वशीर्षं सम्पूर्णम् ।।

•

## देव्यपराधक्षमापनस्तोत्रम्

न मंत्रं नो यंत्रं तदपि च न जाने स्तुतिमहो
न चाह्वानं ध्यानं तदपि च न जाने स्तुतिकथाः।
न जाने मुद्रास्ते तदपि च न जाने विलपनं
परं जाने मातस्त्वदनुसरणं क्लेशहरणम् ।। १ ।।

विधेरज्ञानेन द्रविणविरहेणालसतया
विधेयाशक्यत्वात्तव चरणयोर्या च्युतिरभूत् ।
तदेतत्क्षंतव्यं जननि सकलोद्धारिणि शिवे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥ २ ॥

पृथिव्यां पुत्रास्ते जननि बहवः संति सरलाः
परं तेषां मध्ये विरलतरलोऽयं तव सुतः ।
मदीयोऽयं त्यागः समुचितमिदं नो तव शिवे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥ ३ ॥

जगन्मातर्मातस्तव चरणसेवा न रचिता
न वा दत्तं देवि द्रविणमपि भूयस्तव मया ।
तथापि त्वं स्नेहं मयि निरुपमं यत्प्रकुरुषे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥ ४ ॥

परित्यक्त्वा देवान्विविधविधसेवाकुलतया
मया पंचाशीतेरधिकमपनीते तु वयसि ।
इदानीं चेन्मातस्तव यदि कृपा नापि भविता
निरालंबो लंबोदरजननि कं यामि शरणम् ॥ ५ ॥

श्वपाको जल्पाको भवति मधुपाकोपमगिरा
निरातंको रंको विहरति चिरं कोटिकनकैः ।
तवापर्णे कर्णे विशति मनुवर्णे फलमिदं
जनः को जानीते जननि जपनीयं जपविधौ ॥ ६ ॥

चिताभस्मालेपो गरलमशनं दिक्पटधरो
जटाधारी कंठे भुजगपतिहारी पशुपतिः ।
कपाली भूतेशो भजति जगदीशैकपदवीं
भवानि त्वत्पाणिग्रहणपरिपाटीफलमिदम् ॥ ७ ॥

न मोक्षस्याकांक्षा न च विभववांछापि च न मे
न विज्ञानापेक्षा शशिमुखि सुखेच्छापि न पुनः ।
अतस्त्वां संयाचे जननि जननं यातु मम वै
मृडानी रुद्राणी शिव शिव भवानीति जपतः ॥ ८ ॥

नाराधितासि विधिना विविधोपचारैः
किं रुक्षचिंतनपरैर्न कृतं वचोभिः ।
श्यामे त्वमेव यदि किंचन मय्यनाथे
धत्से कृपामुचितमंब परं तवैव ॥ ९ ॥

आपत्सु मग्नः स्मरणं त्वदीयं करोमि दुर्गे करुणार्णवे शिवे ।
नैतच्छठत्वं मम भावयेथाः क्षुधातृषार्ता जननीं स्मरंति ॥१०॥
जगदंब विचित्रमत्र किं परिपूर्णा करुणाऽस्ति चेन्मयि ।
अपराधपरंपरावृतं न हि माता समुपेक्षते सुतम् ॥११॥
मत्समः पातकी नास्ति पापघ्नी त्वत्समा न हि ।
एवं ज्ञात्वा महादेवि यथा योग्यं तथा कुरु ॥१२॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं
देव्यपराधक्षमापनस्तोत्रं संपूर्णम् ॥

•

## अर्गलास्तोत्रम्

अस्य श्रीअर्गलास्तोत्रमंत्रस्य विष्णुर्ऋषिः अनुष्टुप्छंदः, श्रीमहालक्ष्मीर्देवता श्रीजगदंबाप्रीतये जपे विनियोगः । ॐ नमश्चण्डिकायै ।

जयन्ती मङ्गला काली भद्रकाली कपालिनी ।
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ॥ १ ॥
मधुकैटभविद्रावि विधातृवरदे नमः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २ ॥
महिषासुरनिर्नाशिविधात्रि वरदे नमः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ३ ॥
वन्दितांघ्रियुगे देवि सर्वसौभाग्यदायिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ४ ॥
रक्तबीजवधे देवि चंडमुंडविनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ५ ॥
अचिन्त्यरूपचरिते सर्वशत्रुविनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ६ ॥
नतेभ्यः सर्वदा भक्त्या चण्डिके दुरितापहे ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ७ ॥
स्तुवद्भ्यो भक्तिपूर्वं त्वां चण्डिके व्याधिनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ८ ॥
चण्डिके सततं ये त्वामर्चयंतीह भक्तितः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ९ ॥

देहि सौभाग्यमारोग्यं देहि देवि परं सुखम् ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१०॥

विधेहि द्विषतां नाशं विधेहि बलमुच्चकैः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥११॥

विधेहि देवि कल्याणं विधेहि परमां श्रियम् ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१२॥

विद्यावन्तं यशस्वन्तं लक्ष्मीवन्तं जनं कुरु ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१३॥

प्रचण्डदैत्यदर्पघ्ने चण्डिके प्रणताय मे ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१४॥

चतुर्भुजे चतुर्वक्त्रसंस्तुते परमेश्वरि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१५॥

कृष्णेन संस्तुते देवि शश्वद्भक्त्या त्वमम्बिके ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१६॥

हिमाचलसुतानाथसंस्तुते परमेश्वरि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१७॥

सुरासुरशिरोरत्ननिघृष्टचरणेऽम्बिके ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१८॥

इन्द्राणीपतिसद्भावपूजिते परमेश्वरि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१९॥

देवि भक्तजनोद्दामदत्तानन्दोदयेऽम्बिके ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥२०॥

पुत्रान्देहि धनं देहि सर्वकामांश्च देहि मे ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥२१॥

पत्नीं मनोरमां देहि मनोवृत्तानुसारिणीम् ।
तारिणीं दुर्गसंसारसागरस्य कुलोद्भवाम् ॥२२॥

इदं स्तोत्रं पठित्वा तु महास्तोत्रं पठेन्नरः ।
स तु सप्तशतीसंख्यावरमाप्नोति सम्पदाम् ॥२३॥

इति श्रीमार्कण्डेयपुराणे अर्गलास्तोत्रं संपूर्णम् ॥

•

## भगवत्याः कीलकस्तोत्रम्

अस्य श्रीकीलकमंत्रस्य शिव ऋषिः, अनुष्टुप्छंदः, श्रीमहासरस्वती देवता, श्रीजगदंबाप्रीत्यर्थं जपे विनियोगः । ॐ नमश्चण्डिकायै । ॐ मार्कण्डेय उवाच ॥

विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ।
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥ १ ॥
सर्वमेतद्विना यस्तु मन्त्राणामपि कीलकम् ।
सोऽपि क्षेममवाप्नोति सततं जाप्यतत्परः ॥ २ ॥
सिद्ध्यन्त्युच्चाटनादीनि वस्तूनि सकलान्यपि ।
एतेन स्तुवतां नित्यं स्तोत्रमात्रेण सिद्ध्यति ॥ ३ ॥
न मन्त्रो नौषधं तत्र न किंचिदपि विद्यते ।
विद्या जाप्येन सिद्ध्येत सर्वमुच्चाटनादिकम् ॥ ४ ॥
समग्राण्यपि सिद्ध्यन्ति लोकशंकामिमां हरः ।
कृत्वा निमंत्रयामास सर्वमेवमिदं शुभम् ॥ ५ ॥
स्तोत्रं वै चण्डिकायास्तु तच्च गुह्यं चकार सः ।
समाप्तिर्न च पुण्यस्य तां यथावन्नियन्त्रणाम् ॥ ६ ॥
सोऽपि क्षेममवाप्नोति सर्वमेव न संशयः ।
कृष्णायां वा चतुर्दश्यामष्टम्यां वा समाहितः ॥ ७ ॥
ददाति प्रतिगृह्णाति नान्यथैषा प्रसीदति ।
इत्थंरूपेण कीलेन महादेवेन कीलितम् ॥ ८ ॥
यो निष्कीलां विधायैना नित्यं जपति सुस्फुटम् ।
ससिद्धः सगणः सोऽपि गन्धर्वो जायते वने ॥ ९ ॥
न चैवाप्यटतस्तस्य भयं क्वापि हि जायते ।
नाऽपमृत्युवशं याति मृतो मोक्षमवाप्नुयात् ॥१०॥
ज्ञात्वा प्रारभ्य कुर्वीत ह्यकुर्वाणो विनश्यति ।
ततो ज्ञात्वैव सम्पन्नमिदं प्रारभ्यते बुधैः ॥११॥
सौभाग्यादि च यत्किंचिद्दृश्यते ललनाजने ।
तत्सर्वं तत्प्रसादेन तेन जाप्यमिदं शुभम् ॥१२॥
शनैस्तु जप्यमानेऽस्मिन्स्तोत्रे सम्पत्तिरुच्चकैः ।
भवत्येव समग्रापि ततः प्रारभ्यमेव तत् ॥१३॥
ऐश्वर्यं यत्प्रसादेन सौभाग्यारोग्यसम्पदः ।
शत्रुहानिः परो मोक्षः स्तूयते सा न किं जनैः ॥१४॥

इति भगवत्याः कीलकस्तोत्रं समाप्तम् ॥

# पुराणोक्तं रात्रिसूक्तम्

विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् ।
निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः ॥१॥

ब्रह्मोवाच

त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारस्वरात्मिका ।
सुधा त्वमक्षरे नित्ये त्रिधा मात्रात्मिका स्थिता ॥२॥

अर्धमात्रा स्थिता नित्या यानुच्चार्या विशेषतः ।
त्वमेव संध्या सावित्री त्वं देवि जननी परा ॥३॥

त्वयैतद्धार्यते विश्वं त्वयैतत्सृज्यते जगत् ।
त्वयैतत्पाल्यते देवि त्वमत्स्यंते च सर्वदा ॥४॥

विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने ।
तथा संहृतिरूपांते जगतोऽस्य जगन्मये ॥५॥

महाविद्या महामाया महामेधा महास्मृतिः ।
महामोहा च भवती महादेवी महेश्वरी ॥६॥

प्रकृतिस्त्वं च सर्वस्य गुणत्रयविभाविनी ।
कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा ॥७॥

त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा ।
लज्जा पुष्टिस्तथा तुष्टिस्त्वं शांतिः क्षांतिरेव च ॥८॥

खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ।
शंखिनी चापिनी बाणभुशुण्डीपरिघायुधा ॥९॥

सौम्यासौम्यतराशेषसौम्येभ्यस्त्वतिसुंदरी ।
परा पराणां परमा त्वमेव परमेश्वरी ॥१०॥

यच्च किंचित्क्वचिद्वस्तु सदसद्वाऽखिलात्मिके ।
तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे मया ॥११॥

यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत् ।
सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ॥१२॥

विष्णुः शरीरग्रहणमहमीशान एव च ।
कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान्भवेत् ॥१३॥

सा त्वमित्थंप्रभावैः स्वैरुदारैर्देवि संस्तुता ।
मोहयैतौ दुराधर्षावसुरौ मधुकैटभौ ॥१४॥
प्रबोधं च जगत्स्वामी नीयतामच्युतो लघु ।
बोधश्च क्रियतामस्य हंतुमेतौ महासुरौ ॥१५॥

इति पुराणोक्तं रात्रिसूक्तं संपूर्णम् ॥

•

## देवीक्षमापनस्तोत्रम्

अपराधसहस्राणि क्रियंतेऽर्हनिशं मया ।
दासोऽयमिति मां मत्वा क्षमस्व परमेश्वरि ॥१॥
आवाहनं न जानामि न जानामि विसर्जनम् ।
पूजां चैव न जानामि क्षम्यतां परमेश्वरि ॥२॥
मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरि ।
यत्पूजितं मया देवि परिपूर्णं तदस्तु मे ॥३॥
अपराधशतं कृत्वा जगदंबेति चोच्चरेत् ।
यां गतिं समवाप्नोति न तां ब्रह्मादयः सुराः ॥४॥
सापराधोऽस्मि शरणं प्राप्तस्त्वां जगदंबिके ।
इदानीमनुकंप्योऽहं यथेच्छसि तथा कुरु ॥५॥
अज्ञानाद्विस्मृतेर्भ्रान्त्या यन्न्यूनमधिकं कृतम् ।
तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि ॥६॥
कामेश्वरि जगन्मातः सच्चिदानंदविग्रहे ।
गृहाणार्चामिमां प्रीत्या प्रसीद परमेश्वरि ॥७॥
गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादात्सरेश्वरि ॥८॥

इति देवीक्षमापनस्तोत्रं संपूर्णम् ॥

•

## अंबाष्टकम्

चेटीभवन्निखिलखेटीकदंबतरुवाटीषु नाकिपटली-
कोटीरचारुतरकोटीमणीकिरणकोटीकरंबितपदा ।
पाटीरगंधकुचशाटी कवित्वपरिपाटीमगाधिपसुता
घोटी कुलादधिकधाटीमुदारमुखवीटीरसेन तनुताम् ॥१॥

कूलातिगामिभयतूलावलिज्वलनकीला निजस्तुतिविधा
कीलाहलक्षपितकालामरी कलशकीलालपोषणनभः ।
स्थूला कुचे जलदनीला कचे कलितलीला कदम्बविपिने
शूलायुधप्रणतिशीला विभातु हृदि शैलाधिराजतनया ॥२॥

यत्राशयो लगति तन्नागजा वसतु कुत्रापि निस्तुलशुका
सुत्रामकालमुखसत्राशनप्रकरसुत्राणकारिचरणा ।
छत्रानिलातिरयपत्त्राभिरामगुणमित्त्रामरीसमवधूः
कुत्रासहन्मणिविचित्राकृतिः स्फुरितपुत्रादिदाननिपुणा ॥३॥

द्वैपायनप्रभृतिशापायुधत्रिदिवसोपानधूलिचरणा
पापापहस्वमनुजापानुलीनजनतापापनोदनिपुणा ।
नीपालया सुरभिधूपालका दुरितकूपादुदंचयतु मां
रूपाधिका शिखरिभूपालवंशमणिदीपायिता भगवती ॥४॥

यालीभिरात्मतनुताली सकृत्प्रियकपालीषु खेलति भय-
व्यालीनकुल्यसितचूलीभरा चरणधूलीलसन्मुनिवरा ।
बालीभृति श्रवसि तालीदलं वहति यालीकशोभितिलका
सालीकरोतु मम काली मनः स्वपदनालीकसेवनविधौ ॥५॥

न्यंकाकरे वपुषि कंकातिरक्तपुषि कंकादिपक्षिविषये
त्वं कामनामयसि किं कारणं हृदयपंकारिमेहि गिरिजाम् ।
शंकाशिलानिशितटंकायमानपदसंकाशमानसुमनो-
झंकारिमानततिमकानुपेतशशिसंकाशिवक्त्रकमलाम् ॥६॥

कुंबावतीसमविडंबा गलेन नवतुंबाभवीणसविधा
शं बाहुलेयशशिबिंबाधिराममुखसंबाधितस्तनभरा ।
अंबा कुरंगमदजंबालरोचिरिह लंबालका दिशतु मे
बिंबाधरा विनतशंबायुधादिनकुरंबा कदंबविपिने ॥७॥

इंधानकीरमणिबंधा भवे हृदयबंधावतीव रसिका
संधावती भुवनसंधारणेऽप्यमृतसिंधावुदारधिया ।
गंजानुभानमुहुरंधालिवीतकचबंधा समर्पयतु मे
शं धाम भानुमपि संधानमाशुपदसंधानमप्यगसुता ॥८॥

इति श्रीमच्छंकराचार्यविरचितमंबाष्टकं संपूर्णम् ॥

•

## भ्रमरांबाष्टकम्

चांचल्यारुणलोचनाञ्चितकृपाचंद्रार्कचूडामणिं
चारुस्मेरमुखां चराचरजगत्संरक्षणीं तत्पदाम् ।
चञ्चच्चम्पकनासिकाग्रविलसन्मुक्तामणीरञ्जितां
श्रीशैलस्थलवासिनींभगवतीं श्रीमातरं भावये ॥१॥
कस्तूरीतिलकाञ्चितेन्दुविलसत्प्रोद्भासिभालस्थलीं
कर्पूरद्रवमिश्रचूर्णखदिरामोदोल्लसद्वीटिकाम् ।
लोलापाङ्गतरङ्गितैरधिकृपासारैर्नतानन्दिनीं
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥२॥
राजन्मत्तमरालमन्दगमनां राजीवपत्रेक्षणां
राजीवप्रभवादिदेवमुकुटै राजत्पदाम्भोरुहाम् ।
राजीवायतमन्दमण्डितकुचां राजाधिराजेश्वरीं
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥३॥
षट्तारां गणदीपिकां शिवसतीं षड्वैरिवर्गापहां
षट्चक्रान्तरसंस्थितां वरसुधां षड्योगिनीवेष्टिताम् ।
षट्चक्राञ्चित पादुकाञ्चितपदां षड्भावगां षोडशीं
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥४॥
श्रीनाथादृतपालितत्रिभुवनां श्रीचक्रसंसारिणीं
ज्ञानासक्तमनोजयौवनलसद्गन्धर्वकन्यादृताम् ।
दीनानामतिवेलभाग्यजननीं दिव्यांबरालंकृतां
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥५॥
लावण्याधिकभूषितांगतिलकां लाक्षालसद्रागिणीं
सेवायातसमस्तदेववनितां सीमंतभूषान्विताम् ।
भावोल्लासवशीकृतप्रियतमां भण्डासुरच्छेदिनीं
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥६॥
धन्यां सोमविभावनीयचरितां धाराधरश्यामलां
मुन्याराधनमेधिनीं सुमवतां मुक्तिप्रदानव्रताम् ।
कन्यापूजनसुप्रसन्नहृदयां काञ्चीलसन्मध्यमां
श्रीशैलस्थलवासिनी भगवतीं श्रीमातरं भावये ॥७॥
कर्पूरागरुकुंकुमांकितकुचां कर्पूरवर्णस्थितां
कृष्टोत्कृष्टसुकृष्टकर्मदहनां कामेश्वरीं कामिनीम् ।
कामाक्षीं करुणारसार्द्रहृदयां कल्पान्तरस्थायिनीं
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥८॥

गायत्रीं गरुडध्वजां गगनगां गान्धर्वगानप्रियां
गम्भीरां गजगामिनीं गिरिसुतां गन्धाक्षतालंकृताम्।
गंगागौतमगर्गसंनुतपदां गां गौतमीं गोमतीं
श्रीशैलस्थलवासिनीं भगवतीं श्रीमातरं भावये ॥९॥

इति श्रीमच्छङ्करभगवतः कृतौ भ्रमराम्बाष्टकं संपूर्णम् ॥

•

## विन्ध्येश्वरीस्तोत्रम्

निशुम्भशुम्भमर्दिनीं प्रचण्डमुण्डखण्डनीम् ।
वने रणे प्रकाशिनीं भजामि विन्ध्यवासिनीम् ॥१॥

त्रिशूलमुण्डधारिणीं धराविघातहारिणीम् ।
गृहे गृहे निवासिनीं भजामि विन्ध्य० ॥२॥

दरिद्रदुःखहारिणीं सतां विभूतिकारिणीम् ।
वियोगशोकहारिणीं भजामि विन्ध्य० ॥३॥

लसत्सुलोललोचनं लतासदेवरप्रदम् ।
कपालशूलधारिणीं भजामि विन्ध्य० ॥४॥

करो मुदा गदाधरो शिवां शिवप्रदायिनीम् ।
वरावराननां शुभां भजामि विन्ध्य० ॥५॥

ऋषीन्द्रजामिनिप्रदं त्रिधास्यरूपधारिणीम् ।
जले स्थले निवासिनीं भजामि विन्ध्य० ॥६॥

विशिष्टसृष्टिकारिणीं विशालरूपधारिणीम् ।
महोदरे विशालिनीं भजामि विन्ध्य० ॥७॥

पुरन्दरादिसेवितां मुरादिवंशखण्डनीम् ।
विशुद्धबुद्धिकारिणीं भजामि विन्ध्यवासिनीम् ॥८॥

इति विन्ध्येश्वरीस्तोत्रं संपूर्णम् ॥

•

## भवानीभुजंगस्तुतिः

षडधारपंकेरुहांतर्विराजत्सुषुम्नांतरालेऽतितेजोल्लसंतीम् ।
सुधामंडलं द्रावयंतीं पिबंतीं सुधामूर्तिम डेऽहमानंदरूपाम् ॥१॥
ज्वलत्कोटिबालार्कभासारुणांगीं सुलावण्यशृंगारशोभाभिरामाम् ।
महापद्मकिंजल्कमध्ये विराजन्त्रिकोणोल्लसंतीं भजे श्रीभवानीम् ॥२॥
क्वणत्किंकिणीनूपुरोद्भासिरत्नप्रभालीढलाक्षार्द्रपादारविंदाम् ।
अजेशाच्युताद्यैः सुरैः सेव्यमानां महादेवि मन्मूर्ध्नि ते भावयामि ॥३॥
सुशोणांबराबद्धनीवीविराजन्महारत्नकांचीकलापं नितंबम् ।
स्फुरद्दक्षिणावर्तनाभिं च तिस्रो वली रम्यते रोमराजीं भजेऽहम् ॥४॥
लसद्वृत्तमुत्तुंगमाणिक्यकुंभोपमश्रीस्तनद्वंद्वमंबांबुजाक्षीम् ।
भजे पूर्णदुग्धाभिरामं तवेदं महाहारदीप्तं सदा प्रस्नुतास्यम् ॥५॥
शिरीषप्रसूनोल्लसद्बाहुदंडैर्ज्वलद्बाणकोदंडपाशांकुशैश्च ।
चलत्कंकणोदारकेयूरभूषाज्वलद्भिः स्फुरंतीं भजे श्रीभवानीम् ॥६॥
शरत्पूर्णचंद्रप्रभापूर्णबिंबाधरस्मेरवक्त्रारविंदश्रियं ते ।
सुरत्नावलीहारताटंकशोभां भजे सुप्रसन्नामहं श्रीभवानीम् ॥७॥
सुनासापुटं पद्मपत्रायताक्षं यजंतः श्रियं दानदक्षं कटाक्षम् ।
ललाटोल्लसद्गंधकस्तूरिभूषाज्वलद्भिः स्फुरंतीं भजे श्रीभवानीम् ॥८॥
चलत्कुंडलां ते भ्रमद्भृंगवृंदां घनस्निग्धधम्मिल्लभूषोज्ज्वलंतीम् ।
स्फुरन्मौलिमाणिक्यमध्येन्दुरेखाविलासोल्लसद्दिव्यमूर्धानमीडे ॥९॥
स्फुरत्त्वांब बिंबस्य मे हृत्सरोजे सदा वाङ्मयं सर्वतेजोमयं च ।
इति श्रीभवानीस्वरूपं तदेवं प्रपंचात्परं चातिसूक्ष्मं प्रसन्नम् ॥१०॥
गणेशाणिमाद्याखिलैः शक्तिवृन्दैः स्फुरच्छ्रीमहाचक्रराजोल्लसंतीम् ।
परां राजराजेश्वरीं त्वां भवानीं शिवांकोपरिस्थां शिवां भावयेऽहम्॥११॥
त्वमर्कस्त्वमग्निस्त्वमिंदुस्त्वमापस्त्वमाकाशभूवायवस्त्वं चिदात्मा ।
त्वदन्यो न कश्चित्प्रकाशोऽस्ति सर्वं सदानंदसंवित्स्वरूपं तवेदम् ॥१२॥
गुरुस्त्वं शिवस्त्वं च शक्तिस्त्वमेव त्वमेवासि माता पिताऽसि त्वमेव ।
त्वमेवासि विद्या त्वमेवासि बुद्धिर्गतिर्मे मतिर्देवि सर्वं त्वमेव ॥१३॥
श्रुतीनामगम्यं सुवेदागमाद्यैर्महिम्नो न जानाति पारं तवेदम् ।
स्तुतिं कर्तुमिच्छामि ते त्वं भवानि क्षमस्वेदमंब प्रमुग्धः किलाहम् ॥१४॥
शरण्ये वरेण्ये सुकारुण्यपूर्णे हिरण्योदराद्यैरगम्येऽतिपुण्ये ।
भवारण्यभीतं च मां पाहि भद्रे नमस्ते नमस्ते नमस्ते भवानि ॥१५॥

इमामन्वहं श्रीभवानीभुजंगस्तुतिं यः पठेच्छ्रोतुमिच्छेत तस्मै ।
स्वकीयं पदं शाश्वतं चैव सारं श्रियं चाष्टसिद्धीश्च देवी ददाति ॥१६॥

इति श्रीमत्परमहंसश्रीमच्छंकराचार्यप्रणीता भवानीभुजंगस्तुतिः संपूर्णा ॥

•

## भगवतीपद्यपुष्पांजलिस्तोत्रम्

भगवति भगवत्पदपंकजं भ्रमरभूतसुरासुरसेवितम् ।
सुजनमानसहंसपरिस्तुतं कमलयाऽमलया निभृतं भजे ॥ १ ॥

ते उभे अभिवंदेऽहं विघ्नेशकुलदैवते ।
नरनागाननस्त्वेको नरसिंह नमोऽस्तु ते ॥ २ ॥

हरिगुरुपदपद्मं शुद्धपद्मेऽनुरागाद्विगतपरमभागे सन्निधायादरेण ।
तदनुचरि करोमि प्रीतये भक्तिभाजां भगवति पदपद्मे पद्यपुष्पांजलिं ते ॥ ३ ॥

केनैते रचिताः कुतो न निहिताः शुंभादयो दुर्मदाः
केनैते तव पालिता इति हि तत् प्रश्ने किमाचक्ष्महे ।
ब्रह्माद्या अपि शंकिताः स्वविषये यस्याः प्रसादावधि
प्रीता सा महिषासुरप्रमथिनी छिंद्यादवद्यानि मे ॥ ४ ॥

पातु श्रीस्तु चतुर्भुजा किमु चतुर्बाहोर्महौजान्भुजान्
धत्तेऽष्टादशधा हि कारणगुणाः कार्ये गुणारंभका ।
सत्यं दिक्पतिदंतिसंख्यभुजभृच्छंभुः स्वयंभूः स्वयं
धामैकप्रतिपत्तये किमथवा पातुं दशाष्टौ दिशः ॥ ५ ॥

प्रीत्याऽष्टादशसंमितेषु युगपद्द्वीपेषु दातुं वरान्
त्रातुं वा भयतो बिभर्षि भगवत्यष्टादशैतान् भुजान् ।
यद्वाऽष्टादशधा भुजांस्तु बिभृतः काली सरस्वत्युभे
मीलित्वैकमिहानयोः प्रथयितुं सा त्वं रमे रक्ष माम् ॥ ६ ॥

अयि गिरिनंदिनि नंदितमेदिनि विश्वविनोदिनि नंदनुते
गिरिवरविंध्यशिरोधिनिवासिनि विष्णुविलासिनि जिष्णुनुते ।
भगवति हे शितिकंठकुटुंबिनि भूरिकुटुंबिनि भूरिकृते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥७॥

सुरवरवर्षिणि दुर्धरधर्षिणि दुर्मुखमर्षिणि हर्षरते
त्रिभुवनपोषिणि शंकरतोषिणि किल्बिषमोषिणि घोषरते ।
दनुजनिरोषिणि दितिसुतरोषिणि दुर्मदशोषिणि सिंधुसुते
जय जय हे० ॥८॥

अयि जगदंब मदंब कदंबवनप्रियवासिनी हासरते
शिखरिशिरोमणितुंगहिमालयशृंगनिजालयमध्यगते ।
मधुमधुरे मधुकैटभगंजिनि कैटभभंजिनि रासरते
जय जय हे० ॥९॥

अयि शतखंडविखंडितरुंडवितुंडितशुंडगजाधिपते
रिपुगजगंडविदारणचंडपराक्रमशुंड मृगाधिपते ।
निजभुजदंडनिपातितखंडनिपातितमंडभटाधिपते
जय जय हे० ॥१०॥

अयि रणदुर्मदशत्रुवधोदितदुर्धरनिर्जरशक्तिभृते
चतुरविचारधुरीणमहाशिवदूतकृतप्रमथाधिपते ।
दुरितदुरीहदुराशयदुर्मतिदानवदूतकृतांतमते
जय जय० ॥११॥

अयि शरणागतवैरिवधूवरवीरवराभयदायकरे
त्रिभुवनमस्तकशूलविरोधिशिरोधिकृतामलशूलकरे ।
दुमिदुमितामरदुंदुभिनादमहोमुखरीकृततिग्मकरे
जय जय हे० ॥१२॥

अयि निजहुंकृतिमात्रनिराकृतधूम्रविलोचनधूम्रशते
समरविशोषितशोणितबीजसमुद्भवशोणितबीजलते ।
शिवशिव शुंभनिशुंभमहाहवतर्पितभूतपिशाचरते
जय जय हे० ॥१३॥

धनुरनुसंगरणक्षणसंगपरिस्फुरदंगनटत्कवके
कनकपिशंगपृषत्कनिषंगरसद्भटशृंगहताबटुके ।
कृतचतुरंगबलक्षितिरंगघटद्बहुरंगरटद्बटुके
जय जय हे० ॥१४॥

सुरललनाततथेयितथेयितथाभिनयोत्तरनृत्यरते
धिमिकटधिक्कटधिकटधिमिध्वनिधीरमृदंगनिनादरते
जय जय हे० ॥१५॥

जय जय जप्यजये जयशब्दपरस्तुतितत्परविश्वनुते
झणझणझिंजिमिंझिकृतनूपुरसिंजितमोहितभूतपते ।
नटितनटार्धनटीनटनायकनाटितनाट्यसुगानरते
जय जय० ॥१६॥

अयि सुमनःसुमनःसुमनःसुमनःसुमनोहरकांतियुते
श्रितरजनीरजनीरजनीरजनीरजनीकरवक्त्रवृते ।
सुनयनविभ्रमरभ्रमरभ्रमरभ्रमरभ्रमराधिपते
जय जय० ॥१७॥

सहितमहाहवमल्लमतल्लिकमल्लितरल्लकमल्लरते
विरचितवल्लिकपल्लिकमल्लिकझिल्लिकभिल्लिकवर्गवृते
सितकृतफुल्लिसमुल्लसितारुणतल्लजपल्लवसल्ललिते
जय जय० ॥१८॥

अविरलगंडगलन्मदमेदुरमत्तमतंगजराजपते
त्रिभुवनभूषणभूतकलानिधिरूपपयोनिधिराजसुते ।
अयि सुदती जनलालसमानसमोहनमन्मथराजसुते
जय जय० ॥१९॥

कमलदलामलकोमलकांतिकलाकलितामलभाललते
सकलविलासकलानिलयक्रमकेलिचलत्कलहंसकुले ।
अलिकुलसंकुलकुवलयमंडलमौलिमिलद्बकुलालिकुले
जय जय० ॥२०॥

करमुरलीरववीजितकूजितलज्जितकोकिलमञ्जुमते
मिलितपुलिंदमनोहरगुंजितशैलनिकुंजितकुंजगते ।
निजगुणभूतमहाशबरीगणसद्गुणसंभृतकेलितले
जय जय० ॥२१॥

कटितटपीतदुकूलविचित्रमयूखतिरस्कृतचंद्ररुचे
प्रणतसुरासुरमौलिमणिस्फुरदंशुलसन्नखचंद्ररुचे ।
जितकनकाचलमौलिपदोर्जितनिर्झरकुंजरकुंभकुचे
जय जय० ॥२२॥

विजितसहस्रकरैकसहस्रकरैकसहस्रकरैकनुते
कृतसुरतारकसंगरतारकसंगरतारकसूनुसुते ।
सुरथसमाधिसमानसमाधिसमाधिसमाधिसुजातरते
जय जय० ॥२३॥

पदकमलं करुणानिलये वरिवस्यति योऽनुदिनं स शिवे
अयि कमले कमलानिलये कमलानिलयः स कथं न भवेत् ।
तव पदमेव परंपदमित्यनुशीलयतो मम किं न शिवे
जय जय० ॥२४॥

कनकलसत्कलसिंधुजलैरनुसिंचिनुते गुणरंगभुवं
भजति स किं न शचीकुचकुंभतटीपरिरंभसुखानुभवम् ।
तव चरणं शरणं करवाणि नतामरवाणिनिवासि शिवं
जय जय० ॥२५॥

तव विमलेंदुकुलं वदनेन्दुमलं सकलं ननु कूलयते
किमु पुरहूतपुरींदुमुखीसुमुखीभिरसौ विमुखीक्रियते ।
मम तु मतं शिवनामधने भवती कृपया किमुत क्रियते
जय जय० ॥२६॥

अयि मयि दीनदयालुतया कृपयैव त्वया भवितव्यमुमे
अयि जगतो जननी कृपयासि यथासि तथाऽनुमितासि रते ।
यदुचितमत्र भवत्युररीकुरुतादुरुतापमपाकुरुते
जय जय० ॥२७॥

स्तुतिमितस्तिमितः सुसमाधिना नियमतोऽयमतोऽनुदिनं पठेत् ।
परमया रमयापि निषेव्यते परिजनोऽरिजनोऽपि च तं भजेत् ॥२८॥

रमयति किल कर्षस्तेषु चित्तं नराणामवरजवरयस्माद्रामकृष्णः कवीनाम् ।
अकृतसुकृतगम्यं रम्यपद्यैकहर्म्यं स्तवनमवनहेतुं प्रीतये विश्वमातुः ॥२९॥

इंदुरम्यो मुहुर्बिन्दुरम्यो मुहुर्बिन्दुरम्यो यतः साऽनवद्यं स्मृतः ।
श्रीपतेः सूनुना कारितो योऽधुना विश्वमातुः पदे पद्यपुष्पांजलिः ॥३०॥

इति श्रीभगवतीपद्यपुष्पांजलिस्तोत्रं संपूर्णम् ॥

•

## शक्तिमहिम्नः स्तोत्रम्

### दुर्वासा उवाच

मातस्ते महिमां वक्तुं शिवेनापि न शक्यते। भक्त्याऽहं स्तोतुमिच्छामि प्रसीद मम सर्वदा ॥१॥ श्रीमातस्त्रिपुरे परात्परतरे देवि त्रिलोकीमहासौंदर्यार्णवमंथनोद्भवसुधाप्राचुर्यवर्णोज्ज्वलम्। उद्यद्भानुसहस्रनूतनजपापुष्पप्रभं ते वपुः स्वांते मे स्फुरतु त्रिकोणनिलयं ज्योतिर्मयं वाङ्मयम् ॥२॥ आदिक्षांतसमस्तवर्णसुमणिप्रोते वितानप्रभे ब्रह्मादिप्रतिमाभिकीलितषडाधाराब्जकक्षोन्नते। ब्रह्मांडाब्जमहासने जननि ते मूर्तिं भजे चिन्मयीं सौषुम्नायतपीतपंकजमहामध्यत्रिकोणस्थिताम् ॥३॥ या बालेंदुदिवाकराक्षिमधुरा या रक्तपद्मासना रत्नाकल्पविराजितांगलतिका पूर्णेन्दुवक्त्रोज्ज्वला। अक्षस्रक्सृणिपाशपुस्तककरा या बालभानुप्रभा तां देवीं त्रिपुरां शिवां हृदि भजेऽभीष्टार्थसिद्ध्यै सदा ॥४॥ वंदे वाग्भवमैंदवात्मसदृशं वेदादिविद्यागिरो भाषा देशसमुद्भवाः पशुगताश्छंदांसि सप्त स्वरान्। तालान् पंच महाध्वनीन् प्रकटयत्यात्मप्रकाशेन यत्तद्बीजं पदवाक्यमानजनकं श्रीमातृके ते परम् ॥५॥ त्रैलोक्यस्फुटमंत्रतंत्रमहिमा स्वात्मोक्तिरूपं विना यद्बीजं व्यवहारजालमखिलं नास्त्येव मातस्तव। तज्जाप्यस्मरणप्रसक्तसुमतिः सर्वज्ञतां प्राप्य कः शब्दब्रह्मनिवासभूतवदनो नेंद्रादिभिः स्पर्धते ॥६॥ मात्रा याऽत्र विराजतेऽतिविशदा तामष्टधा मातृकां शक्तिं कुंडलिनीं चतुर्विधतनुं यस्तत्त्वविन्मन्यते। सोऽविद्याखिलजन्मकर्मदुरितारण्यं प्रबोधाग्निना भस्मीकृत्य विकल्पजालरहितो मातुः पदं तद्व्रजेत् ॥७॥ तत्ते मध्यमबीजमंब कलयाम्यादित्यवर्णं क्रियाज्ञानेच्छाद्यमनंतशक्तिविभवव्यक्तिं व्यनक्ति स्फुटम्। उत्पत्तिस्थितिकल्पकल्पिततनु स्वात्मप्रभावेन यत्काम्यं ब्रह्महरीश्वरादिविबुधैः कामं क्रियायोजितैः ॥८॥ कामान्कारणतां गतानगणितान् कार्यैरनंतैर्महीमुख्यैः सर्वमनोगतैरधिगतान्मानैरनैकैः स्फुटम्। कामक्रोधसलोभमोहमदमात्सर्यारिषट्कं च यद्बीजं भ्राजयति प्रणौमि तदहं ते साधु कामेश्वरि ॥९॥ यद्भुक्ताखिलकामपूरणचणस्वात्मप्रभावं महाजाड्यध्वांतविदारणैकतरणिज्योतिः प्रबोधप्रदम्। यद्वेदेषु च गीयते श्रुतिमुखं मात्रात्रयेणोमिति श्रीविद्ये तव सर्वराजवशकृत्तत्कामराजं भजे ॥१०॥ यत्ते देवि तृतीयबीजमनलज्वालावलीसंनिभं सर्वाधारतुरीयशक्तिपरमब्रह्माभिधाशब्दितम्। मूर्धन्यान्तबिसर्गभूषितमहौकारात्मकं तत्परं भ्राजद्रूपमनन्यतुल्यममितः स्वान्ते मम द्योतताम् ॥११॥ सर्वं सर्वत एव सर्गसमये कार्येंद्रियाण्यंतरा तत्तद्दिव्यहृषीककर्मभिरियं संव्यश्नुवाना परा। वागर्थ-

कुलाचलांसः सोमार्कघण्टो रुद्रशिरोधरः ।
नदीनदभुजः सर्पाङ्गुलीकस्तारकानखः ॥२३॥
भ्रूमध्यसंस्थितकरो ब्रह्मविद्यामदोत्कटः ।
व्योमनाभिः श्रीहृदयो मेरुपृष्ठोऽर्णवोदरः ॥२४॥
कुक्षिस्थयक्षगन्धर्वरक्षः किन्नरमानुषः ।
पृथ्वीकटिः सृष्टिलिङ्गः शैलोरुर्दस्रजानुकः ॥२५॥
पातालजंघो मुनिपात्कालाङ्गुष्ठस्त्रयीतनुः ।
ज्योतिर्मण्डललाङ्गूलो हृदयालाननिश्चल ॥२६॥
हृत्पद्मकर्णिकाशालिवियत्केलिसरोवरः ।
सद्भक्तध्याननिगडः पूजावारीनिवारितः ॥२७॥
प्रतापी कश्यपसुतो गणपो विष्टपी बली ।
यशस्वी धार्मिकः स्वोजाः प्रथमः प्रथमेश्वरः ॥२८॥
चिन्तामणिद्वीपपतिः कल्पद्रुमवनालयः ।
रत्नमण्डपमध्यस्थो रत्नसिंहासनाश्रयः ॥२९॥
तीव्राशिरोधृतपदो ज्वालिनीमौलिलालितः ।
नन्दानन्दितपीठश्रीर्भोगदाभूषितामनः ॥३०॥
सकामदायिनीपीठः स्फुरदुग्रासनाश्रयः ।
तेजोवतीशिरोरत्नं सत्यानित्यावतंसितः ॥३१॥
सविघ्ननाशिनीपीठः सर्वशक्त्यम्बुजाश्रय ।
लिपिपद्मासनाधारो वह्निधामत्रयाश्रयः ॥३२॥
उन्नतप्रपदो गूढगुल्फः संवृत्तपार्ष्णिकः ।
पीनजंघः श्लिष्टजानुः स्थूलोरुः प्रोन्नमत्कटिः ॥३३॥
निम्ननाभिः स्थूलकुक्षिः पीनवक्षा बृहद्भुजः ।
पीनस्कन्धः कम्बुकण्ठो लम्बोष्ठो लम्बनासिकः ॥३४॥
भग्नवामरदस्तुङ्गः सव्यदन्तो महाहनुः ।
ह्रस्वनेत्रत्रयः शूर्पकर्णो निबिडमस्तकः ॥३५॥
स्तबकाकारकुम्भाग्रो रत्नमौलिर्निरङ्कुशः ।
सर्पहारकटीसूत्रः सर्पयज्ञोपवीतवान् ॥३६॥
सर्पकोटीरकटकः सर्पग्रैवेयकाङ्गदः ।
सर्पकक्ष्योदराबन्धः सर्पराजोत्तरीयकः ॥३७॥
रक्तो रक्ताम्बरधरो रक्तमाल्यविभूषणः ।
रक्तेक्षणो रक्तकरो रक्तताल्वोष्ठपल्लवः ॥३८॥

श्वेतः श्वेताम्बरधरः श्वेतमाल्यविभूषणः ।
श्वेतातपत्ररुचिरः श्वेतचामरवीजितः ॥३९॥
सर्वावयवसम्पूर्णसर्वलक्षणलक्षितः ।
सर्वाभरणशोभाढ्यः सर्वशोभासमन्वितः ॥४०॥
सर्वमङ्गलमाङ्गल्यः सर्वकारणकारणम् ।
सर्वदैककरः शार्ङ्गी बीजापूरी गदाधरः ॥४१॥
इक्षुचापधरः शूली चक्रपाणिः सरोजभृत् ।
पाशी धृतोत्पलः शाली मञ्जरीभृत् स्वदन्तभृत् ॥४२॥
कल्पवल्लीधरो विश्वाभयदैककरो वशी ।
अक्षमालाधरो ज्ञानमुद्रावान्मुद्गरायुधः ॥४३॥
पूर्णपात्री कम्बुधरो विधृतालिसमुद्गकः ।
मातुलिङ्गधरश्चूतकलिकाभृत्कुठारवान् ॥४४॥
पुष्करस्थस्वर्णघटीपूर्णरत्नाभिवर्षकः ।
भारतीसुन्दरीनाथो विनायकरतिप्रियः ॥४५॥
महालक्ष्मीप्रियतमः सिद्धलक्ष्मीमनोरमः ।
रमारमेशपूर्वाङ्गो दक्षिणोमामहेश्वरः ॥४६॥
महीवराहवामाङ्गो रतिकन्दर्पपश्चिमः ।
आमोदमोदजननः सप्रमोदप्रमोदनः ॥४७॥
समेधितसमृद्धिश्रीर्ऋद्धिसिद्धिप्रवर्तकः ।
दत्तसौमुख्यसुमुखः कान्तिकन्दलिताश्रयः ॥४८॥
मदनावत्याश्रिताङ्घ्रिः कृत्तदौर्मुख्यदुर्मुखः ।
विघ्नसम्पल्लवापघ्नः सेवोन्निद्रमदद्रवः ॥४९॥
विघ्नकृन्निघ्नचरणो द्राविणीशक्तिसत्कृतः ।
तीव्राप्रसन्ननयनो ज्वालिनीपालितैकदृक् ॥५०॥
मोहिनीमोहनो भोगदायिनीकान्तिमण्डितः ।
कामिनीकान्तवक्त्रश्रीरधिष्ठितवसुन्धरः ॥५१॥
वसुन्धरामदोन्नद्धमहाशंखनिधिप्रभुः ।
नमद्वसुमतीमौलिमहापद्मनिधिप्रभुः ॥५२॥
सर्वसद्गुरुसंसेव्यः शोचिष्केशहृदाश्रयः ।
ईशानमूर्धा देवेन्द्रशिखा पवननन्दनः ॥५३॥
अग्रप्रत्यग्रनयनो दिव्यास्त्राणां प्रयोगवित् ।
ऐरावतादिसर्वाशावारणावरणप्रियः ॥५४॥

वज्राद्यस्त्रपरीवारो गणचण्डसमाश्रयः ।
जयाजयपरीवारो विजयाविजयावहः ॥५५॥
अजितार्चितपादाब्जो नित्यानित्यावतंसितः ।
विलासिनीकृतोल्लासः शौण्डीसौन्दर्यमण्डितः ॥५६॥
अनन्तानन्तसुखदः सुमङ्गलसुमङ्गलः ।
इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिनिषेवितः ॥५७॥
सुभगासंश्रितपदो ललिताललिताश्रयः ।
कामिनीकामनः काममालिनीकेलिलालितः ॥५८॥
सरस्वत्याश्रयो गौरीनन्दनः श्रीनिकेतनः ।
गुरुगुप्तपदो वाचासिद्धो वागीश्वरीपतिः ॥५९॥
नलिनीकामुको वामारामो ज्येष्ठामनोरमः ।
रौद्रीमुद्रितपादाब्जो हुम्बीजस्तुङ्गशक्तिकः ॥६०॥
विश्वादिजननत्राणः स्वाहाशक्तिः सकीलकः ।
अमृताब्धिकृतावासो मदघूर्णितलोचनः ॥६१॥
उच्छिष्टगण उच्छिष्टगणेशो गणनायकः ।
सार्वकालिकसंसिद्धिर्नित्यशैवो दिगम्बरः ॥६२॥
अनपायोऽनन्तदृष्टिरप्रमेयोऽजरामरः ।
अनाविलोऽप्रतिरथो ह्यच्युतोऽमृतमक्षरम् ॥६३॥
अप्रतर्क्योऽक्षयोऽजय्योऽनाधारोऽनामयोऽमलः ।
अमोघसिद्धिरद्वैतमघोरोऽप्रमिताननः ॥६४॥
अनाकारोऽब्धिभूम्यग्निबलघ्नोऽव्यक्तलक्षणः ।
आधारपीठ आधार आधाराधेयवर्जितः ॥६५॥
आखुकेतन आशापूरक आखुमहारथः ।
इक्षुसागरमध्यस्थ इक्षुभक्षणलालसः ॥६६॥
इक्षुचापातिरेकश्रीरिक्षुचापनिषेवितः ।
इन्द्रगोपसमानश्रीरिन्द्रनीलसमद्युतिः ॥६७॥
इन्दीवरदलश्याम इन्दुमण्डलनिर्मलः ।
इध्मप्रिय इडाभाग इडाधामेन्दिराप्रियः ॥६७॥
इक्ष्वाकुविघ्नविध्वंसी इतिकर्तव्यतेप्सितः ।
ईशानमौलिरीशान ईशानसुत ईतिहा ॥६९॥
ईषणात्रयकल्पान्त ईहामात्रविवर्जितः ।
उपेन्द्र उडुभृन्मौलिरुण्डेरकबलिप्रियः ॥७०॥

उन्नतानन उत्तुङ्ग उदारत्रिदशाग्रणीः ।
ऊर्जस्वानूष्मलमद ऊहापोहदुरासदः ॥७१॥
ऋग्यजुःसामसम्भूतिर्ऋद्धिसिद्धिप्रदायकः ।
ऋजुचित्तैकसुलभ ऋणत्रयविमोचकः ॥७२॥
लुप्तविघ्नः स्वभक्तानां लुप्तशक्तिः सुरद्विषाम् ।
लुप्तश्रीर्विमुखार्चानां लूताविस्फोटनाशनः ॥७३॥
एकारपीठमध्यस्थ एकपादकृतासनः ।
एजिताखिलदैत्यश्रीरेधिताखिलसंशयः ॥७४॥
ऐश्वर्यनिधिरैश्वर्यमैहिकामुष्मिकप्रदः ।
ऐरम्मदसमोन्मेष ऐरावतनिभाननः ॥७५॥
ओङ्कारवाच्य ओङ्कार ओजस्वानोषधीपतिः ।
औदार्यनिधिरौद्धत्यधुर्य औन्नत्यनिस्वनः ॥७६॥
अङ्कुशः सुरनागानामङ्कुशः सुरविद्विषाम् ।
अःसमस्तविसर्गान्तपदेषु परिकीर्तितः ॥७७॥
कमण्डलुधरः कल्पः कपर्दी कलभाननः ।
कर्मसाक्षी कर्मकर्ता कर्माकर्मफलप्रदः ॥७८॥
कदम्बगोलकाकारः कूष्माण्डगणनायकः ।
कारुण्यदेहः कपिलः कथकः कटिसूत्रभृत् ॥७९॥
खर्वः खड्गप्रियः खड्गखान्तान्तस्थः खनिर्मलः ।
खल्वाटशृङ्गनिलयः खट्वाङ्गी खदुरासदः ॥८०॥
गुणाढ्यो गहनो गस्थो गद्यपद्यसुधार्णवः ।
गद्यगानप्रियो गर्जो गीतगीर्वाणपूर्वजः ॥८१॥
गुह्यचाररतो गुह्यो गुह्यागमनिरूपितः ।
गुहाशयो गुहाब्धिस्थो गुरुगम्यो गुरोर्गुरुः ॥८२॥
घण्टाघर्घरिकामाली घटकुम्भो घटोदरः ।
चण्डश्चण्डेश्वरसुहृच्चण्डीशश्चण्डविक्रमः ॥८३॥
चराचरपतिश्चिन्तामणिचर्वणलालसः ।
छन्दश्छन्दोवपुश्छन्दोदुर्लक्ष्यश्छन्दविग्रहः ॥८४॥
जगद्योनिर्जगत्साक्षी जगदीशो जगन्मयः ।
जपो जपपरो जप्यो जिह्वासिंहासनप्रभुः ॥८५॥
झलज्झल्लोल्लसद्दानझङ्कारिभ्रमराकुलः ।
टङ्कारस्फारसंरावष्टङ्कारिमणिनूपुरः ॥८६॥

ठद्वयीपल्लवान्तःस्थसर्वमन्त्रैकसिद्धिदः ।
डिण्डिमुण्डो डाकिनीशो डामरो डिण्डिमप्रियः ॥८७॥
ढक्कानिनादमुदितो ढौको ढुण्ढिविनायकः ।
तत्त्वानां परमं तत्त्वं तत्त्वंपदनिरूपितः ॥८८॥
तारकान्तरसंस्थानस्तारकस्तारकान्तकः ।
स्थाणुः स्थाणुप्रियः स्थाता स्थावरं जङ्गमं जगत् ॥८९॥
दक्षयज्ञप्रमथनो दाता दानवमोहनः ।
दयावान्दिव्यविभवो दण्डभृद्दण्डनायकः ॥९०॥
दन्तप्रभिन्नाभ्रमालो दैत्यवारणदारणः ।
दंष्ट्रालग्नद्विपघटो देवार्थनृगजाकृतिः ॥९१॥
धनधान्यपतिर्धन्यो धनदो धरणीधरः ।
ध्यानैकप्रकटो ध्येयो ध्यानं ध्यानपरायणः ॥९२॥

नन्द्यो नन्दिप्रियो नादो नादमध्यप्रतिष्ठितः ।
निष्कलो निर्मलो नित्यो नित्यानित्यो निरामयः ॥९३॥
परंव्योम परंधाम परमात्मा परंपदम् ।
परात्परः पशुपतिः पशुपाशविमोचकः ॥९४॥
पूर्णानन्दः परानन्दः पुराणपुरुषोत्तमः ।
पद्मप्रसन्ननयनः प्रणताज्ञानमोचनः ॥९५॥

प्रमाणप्रत्ययातीतः प्रणतार्तिनिवारणः ।
फलहस्तः फणिपतिः फेत्कारः फाणितप्रियः ॥९६॥
बाणार्चिताङ्घ्रियुगलो बालकेलिकुतूहली ।
ब्रह्म ब्रह्मार्चितपदो ब्रह्मचारी बृहस्पतिः ॥९७॥
बृहत्तमो ब्रह्मपरो ब्रह्मण्यो ब्रह्मवित्प्रियः ।
बृहन्नादाग्र्यचीत्कारो ब्रह्माण्डावलिमेखलः ॥९८॥
भ्रूक्षेपदत्तलक्ष्मीको भर्गो भद्रो भयापहः ।
भगवान् भक्तिसुलभो भूतिदो भूतिभूषणः ॥९९॥
भव्यो भूतालयो भोगदाता भ्रूमध्यगोचरः ।
मन्त्रो मन्त्रपतिर्मन्त्री मदमत्तमनोरमः ॥१००॥

मेखलावान्मन्दगतिर्मतिमत्कमलेक्षणः ।
महाबलो महावीर्यो महाप्राणो महामनाः ॥१०१॥
यज्ञो यज्ञपतिर्यज्ञगोप्ता यज्ञफलप्रदः ।
यशस्करो योगगम्यो याज्ञिको याजकप्रियः ॥१०२॥

रसो रसप्रियो रस्यो रञ्जको रावणार्चितः ।
रक्षोरक्षाकरो रत्नगर्भो राज्यसुखप्रदः ॥१०३॥
लक्ष्यं लक्ष्यप्रदो लक्ष्यो लयस्थो लड्डुकप्रियः ।
लानप्रियो लास्यपरो लाभकृल्लोकविश्रुतः ॥१०४॥
वरेण्यो वह्निवदनो वन्द्यो वेदान्तगोचरः ।
विकर्ता विश्वतश्चक्षुर्विधाता विश्वतोमुखः ॥१०५॥
वामदेवो विश्वनेता वज्रिवज्रनिवारणः ।
विश्वबन्धनविष्कम्भाधारो विश्वेश्वरप्रभुः ॥१०६॥
शब्दब्रह्म शमप्राप्यः शम्भुशक्तिगणेश्वरः ।
शास्ता शिखाग्रनिलयः शरण्यः शिखरीश्वरः ॥१०७॥
षड्तुकुसुमस्रग्वी षडाधारः षडक्षरः ।
संसारवैद्यः सर्वज्ञः सर्वभेषजभेषजम् ॥१०८॥
सृष्टिस्थितिलयक्रीडः सुरकुञ्जरभेदनः ।
सिन्दूरितमहाकुम्भः सदसद्व्यक्तिदायकः ॥१०९॥
साक्षी समुद्रमथनः स्वसंवेद्यः स्वदक्षिणः ।
स्वतन्त्रः सत्यसङ्कल्पः सामगानरतः सुखी ॥११०॥
हंसो हस्तिपिशाचीशो हवनं हव्यकव्यभुक् ।
हव्यो हुतप्रियो हर्षो हृल्लेखामन्त्रमध्यगः ॥१११॥
क्षेत्राधिपः क्षमाभर्ता क्षमापरपरायणम् ।
क्षिप्रक्षेमकरः क्षेमानन्दः क्षोणीसुरद्रुमः ॥११२॥
धर्मप्रदोऽर्थदः कामदाता सौभाग्यवर्धनः ।
विद्याप्रदो विभवदो भूक्तिमुक्तिफलप्रदः ॥११३॥
अभिरूप्यकरो वीरश्रीप्रदो विजयप्रदः ।
सर्ववश्यकरो गर्भदोषहा पुत्रपौत्रदः ॥११४॥
मेधादः कीर्तिदः शोकहारी दौर्भाग्यनाशनः ।
प्रतिवादिमुखस्तम्भो रुष्टचित्तप्रसादनः ॥११५॥
पराभिचारशमनो दुःखभञ्जनकारकः ।
लवस्त्रुटिः कला काष्ठा निमेषस्तत्परः क्षणः ॥११६॥
घटी मुहूर्तं प्रहरो दिवानक्तमहर्निशम् ।
पक्षो मासोऽयनं वर्षं युगं कल्पो महालयः ॥११७॥
राशिस्तारा तिथिर्योगो वारः करणमंशकम् ।
लग्नं होरा कालचक्रं मेरुः सप्तर्षयो ध्रुवः ॥११८॥

राहुर्मन्दः कविर्जीवो बुधो भौमः शशी रविः ।
कालः सृष्टिः स्थितिर्विश्वं स्थावरं जङ्गमं च यत् ॥११९॥
भूरापोऽग्निर्मरुद्व्योमाहंकृतिः प्रकृतिः पुमान् ।
ब्रह्मा विष्णुः शिवो रुद्र ईशः शक्तिः सदाशिवः ॥१२०॥
त्रिदशाः पितरः सिद्धा यक्षा रक्षांसि किन्नराः ।
साद्धया विद्याधरा भूता मनुष्याः पशवः खगाः ॥१२१॥
समुद्राः सरितः शैला भूतं भव्यं भवोद्भवः ।
साङ्ख्यं पातञ्जलं योगः पुराणानि श्रुतिः स्मृतिः ॥१२२॥
वेदाङ्गानि सदाचारो मीमांसान्यायविस्तरः ।
आयुर्वेदो धनुर्वेदो गान्धर्वं काव्यनाटकम् ॥१२३॥
वैखानसं भागवतं सात्वतं पाञ्चरात्रकम् ।
शैवं पाशुपतं कालामुखं भैरवशासनम् ॥१२४॥
शाक्तं वैनायक सौरं जैनमार्हतसंहिता ।
सदसद्व्यक्तमव्यक्तं सचेतनमचेतनम् ॥१२५॥
बन्धो मोक्षः सुखं भोगोऽयोगः सत्यमणुर्महान् ।
स्वस्ति हुं फट् स्वधा स्वाहा श्रौषड्वौषड्वषण्णमः ॥१२६॥
ज्ञानं विज्ञानमानन्दो बोधः संविच्छमो यमः ।
एक एकाक्षराधार एकाक्षरपरायणः ॥१२७॥
एकाग्रधीरेकवीर एकानेकस्वरूपधृक् ।
द्विरूपो द्विभुजो द्व्यक्षो द्विरदो द्वीपरक्षकः ॥१२८॥
द्वैमातुरो द्विवदनो द्वन्द्वातीतो द्वयातिगः ।
त्रिधामा त्रिकरस्त्रेतात्रिवर्गफलदायकः ॥१२९॥
त्रिगुणात्मा त्रिलोकादिस्त्रिशक्तीशस्त्रिलोचनः ।
चतुर्बाहुश्चतुर्दन्तश्चतुरात्मा चतुर्मुखः ॥१३०॥
चतुर्विधोपायमयश्चतुर्वर्णाश्रमाश्रयः ।
चतुर्विधवचोवृत्तिपरिवृत्तिप्रवर्तकः ॥१३१॥
चतुर्थीपूजनप्रीतश्चतुर्थीतिथिसम्भवः ।
पञ्चाक्षरात्मा पञ्चात्मा पञ्चास्यः पञ्चकृत्यकृत् ॥१३२॥
पञ्चाचारः पञ्चवर्णः पञ्चाक्षरपरायणः ।
पञ्चतालः पञ्चकरः पञ्चप्रणवभावितः ॥१३३॥
पञ्चब्रह्ममयस्फूर्तिः पञ्चावरणवारितः ।
पञ्चभक्ष्यप्रियः पञ्चबाणः पञ्चशिवात्मकः ॥१३४॥

षट्कोणपीठः षट्चक्रधामा षड्ग्रन्थिभेदकः ।
षडध्वध्वान्तविध्वंसी षडङ्गुलमहाह्रदः ॥१३५॥
षण्मुखः षण्मुखभ्राता षट्शक्तिपरिवारितः ।
षड्वैरिवर्गविध्वंसी षडूर्मिभयभञ्जनः ॥१३६॥
षट्तर्कदूरः षट्कर्मनिरतः षड्रसाश्रयः ।
सप्तपातालचरणः सप्तद्वीपोरुमण्डलः ॥१३७॥
सप्तस्वर्लोकमुकुटः सप्तसप्तिवरप्रदः ।
सप्ताङ्गराज्यसुखदः सप्तर्षिगणमण्डितः ॥१३८॥
सप्तच्छन्दोनिधिः सप्तहोता सप्तस्वराश्रयः ।
सप्ताब्धिकेलिकासारः सप्तमातृनिषेवितः ॥१३९॥
सप्तच्छन्दोमोदमदः सप्तच्छन्दोमखप्रभुः ।
अष्टमूर्तिर्ध्येयमूर्तिरष्टप्रकृतिकारणम् ॥१४०॥
अष्टाङ्गयोगफलभूरष्टपत्राम्बुजासनः ।
अष्टशक्तिसमृद्धश्रीरष्टैश्वर्यप्रदायकः ॥१४१॥
अष्टपीठोपपीठश्रीरष्टमातृसमावृतः ।
अष्टभैरवसेव्योऽष्टवसुवन्द्योऽष्टमूर्तिभृत् ॥१४२॥
अष्टचक्रस्फुरन्मूर्तिरष्टद्रव्यहविःप्रियः ।
नवनागासनाध्यासी नवनिध्यनुशासिता ॥१४३॥
नवद्वारपुराधारो नवाधारनिकेतनः ।
नवनारायणस्तुत्यो नवदुर्गानिषेवितः ॥१४४॥
नवनाथमहानाथो नवनागविभूषणः ।
नवरत्नविचित्राङ्गो नवशक्तिशिरोधृतः ॥१४५॥
दशात्मको दशभुजो दशदिक्पतिवन्दितः ।
दशाध्यायो दशप्राणो दशेन्द्रियनियामकः ॥१४६॥
दशाक्षरमहामन्त्रो दशाशाव्यापिविग्रहः ।
एकादशादिभी रुद्रैः स्तुत एकादशाक्षरः ॥१४७॥
द्वादशोद्दण्डदोर्दण्डो द्वादशान्तिनिकेतनः ।
त्रयोदशभिदाभिन्नविश्वेदेवाधिदैवतम् ॥१४८॥
चतुर्दशेन्द्रवरदश्चतुर्दशमनुप्रभुः ।
चतुर्दशादिविद्याढ्यश्चतुर्दशजगत्प्रभुः ॥१९४॥
सामपञ्चदशः पञ्चदशीशीतांशुनिर्मलः ।
षोडशाधारनिलयः षोडशस्वरमातृकः ॥१५०॥

षोडशान्तपदावासः षोडशेन्दुकलात्मकः ।
कलासप्तदशी सप्तदशः सप्तदशाक्षरः ॥१५१॥
अष्टादशद्वीपपतिरष्टादशपुराणकृत् ।
अष्टादशौषधीसृष्टिरष्टादशविधिः स्मृतः ॥१५२॥
अष्टादशलिपिव्यष्टिसमष्टिज्ञानकोविदः ।
एकविंशः पुमानेकविंशत्यङ्गुलिपल्लवः ॥१५३॥
चतुर्विंशतितत्त्वात्मा पञ्चविंशाख्यपूरुषः ।
सप्तविंशतितारेशः सप्तविंशतियोगकृत् ॥१५४॥
द्वात्रिंशद्भैरवाधीशश्चतुस्त्रिंशन्महाह्रदः ।
षट्त्रिंशत्तत्त्वसंभूतिरष्टात्रिंशत्कलातनुः ॥१५५॥
नमदेकोनपञ्चाशन्मरुद्वर्गनिरर्गलः ।
पञ्चाशदक्षरश्रेणी पञ्चाशद्रुद्रविग्रहः ॥१५६॥
पञ्चाशद्विष्णुशक्तीशः पञ्चाशन्मातृकालयः ।
द्विपञ्चाशद्वपुःश्रेणी त्रिषष्ट्यक्षरसंश्रयः ॥१५७॥
चतुःषष्ट्यर्णनिर्णेता चतुःषष्टिकलानिधिः ।
चतुःषष्टिमहासिद्धयोगिनीवृन्दवन्दितः ॥१५८॥
अष्टषष्टिमहातीर्थक्षेत्रभैरवभावनः ।
चतुर्नवतिमन्त्रात्मा षण्णवत्यधिकप्रभुः ॥१५९॥
शतानन्दः शतधृतिः शतपत्रायतेक्षणः ।
शतानीकः शतमखः शतधारावरायुधः ॥१६०॥
सहस्रपत्रनिलयः सहस्रफलभूषणः ।
सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ॥१६१॥
सहस्रनामसंस्तुत्यः सहस्राक्षबलापहः ।
दशसाहस्रफलभृत्फणिराजकृतासनः ॥१६२॥
अष्टाशीतिसहस्राद्यमहर्षिस्तोत्रयन्त्रितः ।
लक्षाधीशप्रियाधारो लक्षाधारमनोमयः ॥१६३॥
चतुर्लक्षजपप्रीतश्चतुर्लक्षप्रकाशितः ।
चतुरशीतिलक्षाणां जीवानां देहसंस्थितः ॥१६४॥
कोटिसूर्यप्रतीकाशः कोटिचन्द्रांशुनिर्मलः ।
शिवाभवाध्युष्टकोटिविनायकधुरन्धरः ॥१६५॥
सप्तकोटिमहामन्त्रमन्त्रितावयवद्युतिः ।
त्रयस्त्रिंशत्कोटिसुरश्रेणीप्रणतपादुकः ॥१६६॥
अनन्तनामानन्तश्रीरनन्ताऽनन्तसौख्यदःॐ ॥१६७॥

फलश्रुतिः

इति वैनायकं नाम्नां सहस्रमिदमीरितम् ।
इदं ब्राह्मे मुहूर्ते यः पठति प्रत्यहं नरः ॥१॥
करस्थं तस्य सकलमैहिकामुष्मिक सुखम् ।
आयुरारोग्यमैश्वर्यं धैर्यं शौर्यं बलं यशः ॥२॥
मेधा प्रज्ञा धृतिः कान्तिः सौभाग्यमतिरूपता ।
सत्यं दया क्षमा शान्तिर्दाक्षिण्यं धर्मशालिता ॥३॥
जगत्संयमनं विश्वसंवादो वादपाटवम् ।
सभापाण्डित्यमौदार्यं गाम्भीर्यं ब्रह्मवर्चसम् ॥४॥
औन्नत्यं च कुलं शीलं प्रतापो वीर्यमार्यता ।
ज्ञान विज्ञानमास्तिक्यं स्थैर्यं विश्वातिशायिता ॥५॥
धनधान्याभिवृद्धिश्च सकृदस्य जपाद् भवेत् ।
वश्यं चतुर्विधं नृणां जपादस्य प्रजायते ॥६॥
राज्ञो राजकलत्रस्य राजपुत्रस्य मन्त्रिणः ।
जप्यते यस्य वश्यार्थं स दासस्तस्य जायते ॥७॥
धर्मार्थकाममोक्षाणामनायासेन साधनम् ।
शाकिनीडाकिनीरक्षोयक्षोरगभयापहम् ॥८॥
साम्राज्यसुखदं चैव समस्तरिपुमर्दनम् ।
समस्तकलहध्वंसि दग्धबीजप्ररोहणम् ॥९॥
दुःस्वप्ननाशनं क्रुद्धस्वामिचित्तप्रसादनम् ।
षट्कर्माष्टमहासिद्धित्रिकालज्ञानसाधनम् ॥१०॥
परकृत्याप्रशमनं परचक्रविमर्दनम् ।
सङ्ग्रामरङ्गे सर्वेषामिदमेकं जयावहम् ॥११॥
सर्ववन्ध्यात्वदोषघ्नं गर्भरक्षैककारणम् ।
पठ्यते प्रत्यहं यत्र स्तोत्रं गणपतेरिदम् ॥१२॥
देशे तत्र न दुर्भिक्षमीतयो दुरितानि च ।
न तद्गृहं जहाति श्रीर्यत्रायं पठ्यते स्तवः ॥१३॥
क्षयकुष्ठप्रमेहार्शभगन्दरविषूचिकाः ।
गुल्मं प्लीहानमश्मानमतिसारं महोदरम् ॥१४॥
कासं श्वासमुदावर्तं शूलशोफादिसंभवम् ।
शिरोरोगं वमिं हिक्कां गण्डमालामरोचकम् ॥१५॥
वातपित्तकफद्वन्द्वत्रिदोषजनितज्वरम् ।
आगन्तुं विषमं शीतमुष्णं चैकाहिकादिकम् ॥१६॥

इत्याद्युक्तमनुक्तं वा रोगं दोषादिसम्भवम् ।
सर्वं प्रशमयत्याशु स्तोत्रस्यास्य सकृज्जपः ॥१७॥
सकृत्पाठेन संसिद्धः स्त्रीशूद्रपतितैरपि ।
सहस्रनाममन्त्रोऽयं जपितव्यः शुभाप्तये ॥१८॥
महागणपतेः स्तोत्रं सकामः प्रजपन्निदम् ।
इच्छया सकलान्भोगाननुभुज्येह पार्थिवान् ॥१९॥
मनोरथफलैर्दिव्यैर्व्योमयानैर्मनोरमैः ।
चन्द्रेन्द्रभास्करोपेन्द्रब्रह्मशर्वादिसद्मसु ॥२०॥
कामरूपः कामगतिः कामतो विचरन्निह ।
भुक्त्वा यथेप्सितान्भोगानभीष्टान्सह बन्धुभिः ॥२१॥
गणेशानुचरो भूत्वा महागणपतेः प्रियः ।
नन्दीश्वरादिसानन्दीनन्दितः सकलैर्गणैः ॥२२॥
शिवाभ्यां कृपया पुत्रनिर्विशेषं च लालितः ।
शिवभक्तः पूर्णकामो गणेश्वरवरात्पुनः ॥२३॥
जातिस्मरो धर्मपरः सार्वभौमोऽभिजायते ।
निष्कामस्तु जपन्नित्यं भक्त्या विघ्नेशतत्परः ॥२४॥
योगसिद्धिं परां प्राप्य ज्ञानवैराग्यसंस्थितः ।
निरन्तरोदितानन्दे परमान्दसंविदि ॥२५॥
विश्वोत्तीर्णे परे पारे पुनरावृत्तिवर्जिते ।
लीनो वैनायके धाम्नि रमते नित्यनिर्वृतः ॥२६॥
यो नामभिर्हुनेदेतैरर्चयेत्पूजयेन्नरः ।
राजानो वश्यतां यान्ति रिपवो यान्ति दासताम् ॥२७॥
मन्त्राः सिध्यन्ति सर्वेऽपि सुलभास्तस्य सिद्धयः ।
मूलमन्त्रादपि स्तोत्रमिदं प्रियतरं मम ॥२८॥
नभस्ये मासि शुक्लायां चतुर्थ्यां मम जन्मनि ।
दूर्वाभिर्नामभिः पूजां तर्पणं विधिवच्चरेत् ।२९॥
अष्टद्रव्यैर्विशेषेण जुहुयाद्भक्तिसंयुतः ।
तस्येप्सितानि सर्वाणि सिध्यन्त्यत्र न संशयः ॥३०॥
इदं प्रजप्तं पठितं पाठितं श्रावितं श्रुतम् ॥३१॥
व्याकृतं चर्चितं ध्यातं विमृष्टमभिनन्दितम् ।
इहामुत्र च सर्वेषां विश्वैश्वर्यप्रदायकम् ॥३२॥
स्वच्छन्दचारिणाप्येष येनायं धार्यते स्तवः ।
स रक्ष्यते शिवोद्भूतैर्गणैरध्युष्टकोटिभिः ॥३३॥

पुस्तके लिखितं यत्र गृहे स्तोत्रं प्रपूजयेत् ।
तत्र सर्वोत्तमा लक्ष्मीः सन्निधत्ते निरन्तरम् ॥३४॥
दानैरशेषैरखिलैर्व्रतैश्च तीर्थैरशेषैरखिलैर्मखैश्च ।
न तत्फलं विन्दति यद्गणेशसहस्रनाम्नां स्मरणेन सद्यः ॥३५॥
एतन्नाम्नां सहस्रं पठति दिनमणौ प्रत्यहं प्रोज्जिहाने
सायं मध्यंदिने वा त्रिषवणमथवा सन्ततं वा जनो यः ।
स स्यादैश्वर्यधुर्यः प्रभवति च सतां कीर्तिमुच्चैस्तनोति
प्रत्यूहं हन्ति विश्वं वशयति सुचिरं वर्धते पुत्रपौत्रैः ॥३६॥
अकिञ्चनोऽपि मत्प्राप्तिचिन्तको नियताशनः ।
जपेत्तु चतुरो मासान् गणेशार्चनतत्परः ॥३७॥
दरिद्रतां समुन्मूल्य सप्तजन्मानुगामपि ।
लभते महतीं लक्ष्मीमित्याज्ञा पारमेश्वरी ॥३८॥
आयुष्यं वीतरोगं कुलमतिविमलं संपदश्चार्तदानाः
कीर्तिर्नित्यावदाता भणितिरभिनवा कान्तिरव्याधिभव्या ।
पुत्राः सन्तः कलत्रं गुणवदभिमतं यद्यदेतच्च सत्यं
नित्यं यः स्तोत्रमेतत्पठति गणपतेस्तस्य हस्ते समस्तम् ॥३९॥
गणञ्जयो गणपतिर्हेरम्बो धरणीधरः ।
महागणपतिर्लक्षप्रदः क्षिप्रप्रसादनः ॥४०॥
अमोघसिद्धिरमितो मन्त्रश्चिन्तामणिर्निधिः ।
सुमङ्गलो बीजमाशापूरको वरदः शिवः ॥४१॥
कश्यपो नन्दनो वाचासिद्धो ढुण्ढिविनायकः ।
मोदकैरेभिरत्रैकविंशत्या नामभिः पुमान् ॥४२॥
यः स्तौति मद्गतमना मदाराधनतत्परः ।
स्तुतो नाम्नां सहस्रेण तेनाहं नात्र संशयः ॥४३॥
नमो नमः सुरवरपूजिताङ्घ्रये
नमो नमो निरुपममङ्गलात्मने ।
नमो नमो विपुलपदैकसिद्धये
नमो नमः करिकलभाननाय ते ॥४४॥

इति श्रीगणेशपुराणे उपासनाखण्डे महागणपतिप्रोक्तं
गणेशसहस्रनामस्तोत्रं सम्पूर्णम् ॥

•

## शिवसहस्रनामस्तोत्रम्

स्थिरः स्थाणुः प्रभुर्भीमः प्रवरो वरदो वरः ॥१॥
सर्वात्मा सर्वविख्यातः सर्वस्सर्वकरो भवः ।
जटी चर्मी शिखण्डी च सर्वांगस्सर्वभावनः ॥२॥
हरश्चहरिणाक्षश्चसर्वभूतहरः प्रभुः ।
प्रवृत्तिश्च निवृत्तिश्च नियतश्शाश्वतो ध्रुवः ॥३॥
श्मशानवासी भगवान् खेचरो गोचरोऽर्दनः ।
अभिवाद्यो महाकर्मा तपस्वी भूतभावनः ॥४॥
उन्मत्तवेषप्रच्छन्नः सर्वलोकप्रजापतिः ।
महारूपो महाकायो वृषरूपो महायशः ॥५॥
महात्मा सर्वभूतात्मा विश्वरूपो महाहनुः ।
लोकपालोऽन्तर्हितात्मा प्रसादो नीललोहितः ॥६॥
पवित्रं च महांश्चैव नियमो नियमाश्रितः ।
सर्वकर्मा स्वयंभूत आदिरादिकरो निधिः ॥७॥
सहस्राक्षो विशालाक्षस्सोमो नक्षत्रसाधकः ।
चन्द्रस्सूर्यश्शनिः केतुर्ग्रहो ग्रहपतिर्वरः ॥८॥
आदिरन्तो लयः कर्ता मृगबाणार्पणोऽनघः ।
महातपा घोरतपा अदीनो दीनसाधकः ॥९॥
संवत्सरकरो मन्त्रः प्रमाणं परमं तपः ।
योगी योग्यो महाबीजो महारेता महाबलः ॥१०॥
सुवर्णरेतास्सर्वज्ञस्सुबीजो बीजवाहनः ।
दशबाहुस्त्वनिमिषो नीलकण्ठ उमापतिः ॥११॥
विश्वरूपस्स्वयंश्रेष्ठो बलवीरो बलो गणः ।
गणकर्ता गणपतिर्दिग्वासाः काम एव च ॥१२॥
मन्त्रवित्परमो मन्त्रः सर्वभावकरो हरः।
कमण्डलुधरो धन्वी बाणहस्तकपालवान् ॥१३॥
अशनी शतघ्नी खड्गी पट्टसी सायुधी महान् ।
स्रुवहस्तस्सुरूपश्च तेजस्तेजस्करो निधिः ॥१४॥
उष्णीषी च सुवक्त्रश्च उदग्रो विनतस्तथा ।
दीर्घश्च हरिकेशश्च सुतीर्थः कृष्ण एव च ॥१५॥
शृगालरूपः सिद्धार्थो मुण्डस्सर्वशुभंकरः ।
अजश्चबहुरूपश्च गङ्गाधारी कपर्द्यपि ॥१६॥

ऊर्ध्वरेता ऊर्ध्वलिङ्ग ऊर्ध्वशायी नभःस्थलः।
त्रिजटश्चीरवासाश्च रुद्रस्सेनापतिर्विभुः ॥१७॥
नक्तचरोऽहश्चरश्च तिग्मन्युस्सुवर्चसः।
गजहा दैत्यहा कालो लोकधाता गुणाकरः ॥१८॥
सिंहशार्दूलरूपश्च व्याघ्रचर्माम्बरावृतः।
कालयोगी महानाथस्सर्वकामश्चतुष्पथः ॥१९॥
निशाचरः प्रेतचारी भूतचारी महेश्वरः।
बहुभूतो बहुधरः स्वर्भानुरमितो गतिः ॥२०॥
नृत्यप्रियो नित्यनर्तो नर्तकस्सर्वलालसः।
महाघोरतपश्शूरो नित्योऽनीहो निरालयः ॥२१॥
सहस्रहस्तो विजयो व्यवसायो ह्यतन्द्रितः।
अमर्षणोऽमर्षणात्मा यज्ञहा कामनाशकः ॥२२॥
दक्षयागापहारी च सुसहो मध्यमस्तथा।
तेजोपहारी बलहा मुदितोऽर्थोऽजितो वरः ॥२३॥
गम्भीरघोषो गम्भीरो गम्भीरबलवाहनः।
न्यग्रोधरूपो न्यग्रोधवृक्षकर्णस्थितिर्विभुः ॥२४॥
सुतीक्ष्णदशनश्चैव महाकायो महाननः।
विष्वक्सेनो हरिर्यज्ञस्संयुगापीडवाहनः ॥२५॥
तीक्ष्णतापश्च हर्यश्वस्सहायः कर्मकालवित्।
विष्णुप्रसादितो यज्ञस्समुद्रो वडवामुखः ॥२६॥
हुताशनसहायश्च प्रशांतात्मा हुताशनः।
उग्रतेजा महातेजा जन्यो विजयकालवित् ॥२७॥
ज्योतिषामयनं सिद्धिस्सर्वविग्रह एव च।
शिखी मुण्डी जटी ज्वाली मूर्तिजो मूर्धगो बली ॥२८॥
वैणवी प्रणवी ताली खेली कालकटंकटः।
नक्षत्रविग्रहमतिर्गुणबुद्धिर्लयोऽगमः ॥२९॥
प्रजापतिर्विश्वबाहुर्विभागः सर्वगोऽमुखः।
विमोचनस्सुसरणो हिरण्यकवचोद्भवः ॥३०॥
मेढ्रजो बलचारी च महीचारी स्तुतस्तथा।
सर्वतूर्यनिनादी च सर्ववाद्यपरिग्रहः ॥३१॥
व्यालरूपो गुहावासी ग्रहमाली तरङ्गवित्।
त्रिदशः कालदृक्कर्मसर्वबन्धविमोचनः ॥३२॥

वन्धनस्त्वसुरेन्द्राणां युधि शत्रुविनाशनः ।
सांख्यप्रसादो दुर्वासास्सर्वसाधुनिषेवितः ॥३३॥
प्रस्कन्दनो विभागज्ञो ह्यतुल्यो यज्ञभागवित् ।
सर्ववासस्सर्वचारी दुर्वासा वासवोऽमरः ॥३४॥
हैमो हेमकरो यज्ञस्सर्वधारी धरोत्तमः ।
लोहिताक्षो महाक्षश्च विजयाक्षो विशारदः ॥३५॥
संग्रहो निग्रहः कर्ता सर्पचीरनिवासिनः ।
मुख्योऽमुख्यश्च देहश्च काहलिस्सर्वकामदः ॥३६॥

सर्वकालप्रसादश्च सुबलो वलरूपभृत् ।
सर्वकामप्रदश्चैव सर्वदम्सर्वतोमुखः ॥३७॥
आकाशनिर्विरूपश्च निपातो ह्यवशः खगः ।
रौद्ररूपोंऽशुरादित्यो वहुरश्मिस्सुवर्चसी ॥३८॥
वसुवेगो महावेगो मनोवेगो निशाचरः ।
सर्ववासी श्रियावासी उपदेशकरोऽकरः ॥३९॥
मुनिरात्मनिरालोकस्संमग्नश्च सहस्रदः ।
पक्षी च प्लक्षरूपश्च अतिदीप्तो विशांपतिः ॥४०॥

उन्मादो मदनः कामो ह्यश्वत्थोऽर्थकरो यशः ।
वामदेवश्च वामश्च प्राग्दक्षिणउदङ्मुखः ॥४१॥
सिद्धयोगी महर्षिश्च सिद्धार्थस्सिद्धसाधकः ।
भिक्षुश्च भिक्षुरूपश्च विपणो मृदुरव्ययः ॥४२॥
महासेनो विशाखश्च षष्टिभागो गवांपतिः ।
वज्रहस्तश्च विष्कम्भी चमूस्तम्भन एव च ॥४३॥

वृत्तवृत्तकरस्तालो मधुर्मधुकलोचनः ।
वाचस्पत्यो वाजसनो नित्यमाश्रितपूजितः ॥४४॥
ब्रह्मचारी लोकचारी सर्वचारी विचारवित् ।
ईशान ईश्वरः कालो निशाचारी पिनाकधृक् ॥४५॥
निमित्तस्थो निमित्तं च नन्दो नन्दिकरो हरिः ।
नन्दीश्वरश्च नन्दी च नन्दनो नन्दिवर्धनः ॥४६॥
भगहारी निहन्ता च कालो ब्रह्मा पितामहः ।
चतुर्मुखो महालिङ्गश्चारुलिङ्गस्तथैव च ॥४७॥
लिङ्गाध्यक्षस्सुराध्यक्षो योगाध्यक्षो युगावहः ।
बीजाध्यक्षो बीजकर्ता अध्यात्मानुगतो बलः ॥४८॥

इतिहासस्सकल्पश्च गौतमोऽथ निशाकरः ।
दम्भो ह्यदम्भो वैदम्भो वश्यो वंशकरः कलिः ॥४९॥
लोककर्ता पशुपतिर्महाकर्ता ह्यनौषधः ।
अक्षरं परमं ब्रह्म बलवान् शक्त एव च ॥५०॥
नीतिर्ह्यनीतिश्शुद्धात्मा शुद्धो मान्यो गतागतः ।
बहुप्रसादस्सुस्वप्नो दर्पणोऽथ त्वमित्रजित् ॥५१॥
वेदकारो मन्त्रकारो विद्वान्समरमर्दनः ।
महामेधनिवासी च महाघोरो वशीकरः ॥५२॥
अग्निज्वालो महाज्वालो ह्यतिधूम्रो हुतो हविः ।
वृषभश्शंकरो नित्यं वर्चस्वी धूमकेतनः ॥५३॥
नीलस्तथांगलुब्धश्च शोभनो निरवग्रहः ।
स्वस्तिदस्स्वस्तिभागश्च भागी भागकरो लघुः ॥५४॥
उत्सङ्गश्च महाङ्गश्च महागर्भपरायणः ।
कृष्णवर्णस्सुवर्णश्च इन्द्रियं सर्वदेहिनाम् ॥५५॥
महापादो महाहस्तो महाकायो महायशाः ।
महामूर्धा महामात्रो महानेत्रो निशालयः ॥५६॥
महान्तको महाकर्णो महोष्ठश्च महाहनुः ।
महानासो महाकम्बुर्महाग्रीवश्श्मशानभाक् ॥५७॥
महावक्षा महोरस्को ह्यन्तरात्मा मृगालयः ।
लम्बनो लम्बितोष्ठश्च महामायः पयोनिधिः ॥५८॥
महादन्तो महादंष्ट्रो महाजिह्वो महामुखः ।
महानखो महारोमा महाकेशो महाजटः ॥५९॥
प्रसन्नश्च प्रसादश्च प्रत्ययो गिरिसाधनः ।
स्नेहनोऽस्नेहनश्चैव अजितश्च महामुनिः ॥६०॥
वृक्षाकारो वृक्षकेतुरनलो वायुवाहनः ।
गण्डली मेरुधामा च देवाधिपतिरेव च ॥६१॥
अथर्वशीर्षस्सामास्य ऋक्सहस्रामितेक्षणः ।
यजुःपादभुजो गुह्यः प्रकाशो जङ्गमस्तथा ॥६२॥
अमोघार्थः प्रसादश्च अभिगम्यस्सुदर्शनः ।
उपकारः प्रियस्सर्वः कनकः कांचनच्छविः ॥६३॥
नाभिर्नन्दकरो भावः पुष्करस्थपतिः स्थिरः ।
द्वादशस्त्रासनश्चाद्यो यज्ञ यज्ञसमाहितः ॥६४॥

नक्तं कलिश्च कालश्च मकरः कालपूजितः ।
सगणी गणकारश्च भूतवाहनसारथि ॥६५॥
भस्माशयो भस्मगोप्ता भस्मभूतस्तरुर्गणः ।
लोकपालस्तथा लोको महात्मा सर्वपूजितः ॥६६॥
शुक्लस्त्रिशुक्लसंपन्नश्शुचिर्भूतनिषेवितः ।
आश्रमस्थः क्रियावस्थो विश्वकर्मपतिर्वरः ॥६७॥
विशालशाखस्ताम्रोष्ठो ह्यम्बुजालस्सुनिश्चलः ।
कपिलः कपिशश्शुक्ल आयुश्चैव परोऽपरः ॥६८॥
गन्धर्वो ह्यादितिस्ताक्ष्र्यस्सुविज्ञेयस्सुशारदः ।
परश्वथायुधो देवोह्यनुकारी सुबान्धवः ॥६९॥
तुम्बवीणो महाक्रोधो ऊर्ध्वरेता जलेशयः ।
उग्रो वंशकरो वंशो वंशनादो ह्यनिन्दितः ॥७०॥
सर्वाङ्गरूपो मायावी सुहृदो ह्यनिलो नलः ।
बन्धनो बन्धकर्ता च सुबन्धनविमोचनः ॥७१॥
स यज्ञारिस्स कामारिर्महादंष्ट्रो महायुधः ।
बहुधाऽनिन्दितश्शर्वश्शङ्करश्चन्द्रशेखरः ॥७२॥
अमरेशो महादेवो विश्वदेवस्सुरारिहा ।
अहिर्बुध्न्योऽनिलाभश्च चेकितानो हरिस्तथा ॥७३॥
अजैकपाच्च कापाली त्रिशङ्कुरजितश्शिवः ।
धन्वन्तरिर्धूमकेतुस्स्कन्दो वैश्रवणस्तथा ॥७४॥
धाता शक्रश्च विष्णुश्च मित्रस्त्वष्टा ध्रुवो धरः ।
प्रभावस्सर्वगो वायुरर्यमा सविता रविः ॥७५॥
उषङ्गुश्च विधाता च मान्धाता भूतभावनः ।
विभुर्वर्णविभावी च सर्वकामगुणावहः ॥७६॥
पद्मनाभो महागर्भश्चन्द्रवक्त्रोऽनिलोऽनलः ।
बलवाँश्चोपशान्तश्च पुराणः पुण्यचञ्चुरी ॥७७॥
कुरुकर्ता कुरुवासी कुरुभूतो गुणौषधः ।
सर्वाशयो दर्भचारी सर्वेषां प्राणिनां पतिः ॥७८॥
देवदेवस्सुखासक्तस्सदसत्सर्वरत्नवित् ।
कैलासगिरिवासी च हिमवद्गिरिसंश्रयः ॥७९॥
कूलहारी कूलकर्ता बहुविद्यो बहुप्रदः ।
वणिजो वर्धकी वृक्षो बकुलश्चन्दनच्छदः ॥८०॥

सारग्रीवो महाजत्रुरलोलश्च महौषधः ।
सिद्धार्थकारी सिद्धार्थश्छन्दोव्याकरणोत्तरः ॥८१॥
सिंहनादस्सिंहदंष्ट्रः सिंहगस्सिंहवाहनः ।
प्रभावात्मा जगत्कालः कालो लोकहितस्तरुः ॥८२॥
सारङ्गो नवचक्राङ्गः केतुमाली सभावनः ।
भूतालयो भूतपतिरहोरात्रमनिन्दितः ॥८३॥
वर्धितस्सर्वभूतानां निलयश्चविभुर्भवः ।
अमोघस्संयतो ह्याश्वो भोजनः प्राणधारणः ॥८४॥
धृतिमान् मतिमान् दक्षः सत्कृतश्च युगाधिपः ।
गोपालो गोपतिर्ग्रामो गोचर्मवसनो हरिः ॥८५॥
हिरण्यबाहुश्च तथा गुहापालः प्रवेशकः ।
प्रकृष्टारिर्महाहर्षो जितकामो जितेन्द्रियः ॥८६॥
गान्धारश्च सुवासश्च तपस्सक्तो रतिर्नरः ।
महागीतो महानृत्यो ह्यप्सरोगणसेवितः ॥८७॥
महाकेतुर्महाधातुर्नैकसानुचरश्चलः ।
आवेदनीय आवेशः सर्वगन्धसुखावहः ॥८८॥
तोरणस्तारणो वातः परिधीपतिखेचरः ।
संयोगो वर्धनो वृद्धो ह्यतिवृद्धो गुणाधिक । ॥८९॥
नित्य आत्मा सहायश्च देवासुरपतिः पतिः ।
युक्तश्च युक्तबाहुश्च देवो दिवि सुपर्वणः ॥९०॥
आषाढश्च सुषाढश्च ध्रुवोऽथ हरिणो हरः ।
वपुरावर्तमानेभ्यो वसुश्रेष्ठो महापथः ॥९१॥
शिरोहारी विमर्शश्च सर्वलक्षणलक्षितः ।
अक्षश्च रथयोगी च सर्वयोगी महाबलः ॥९२॥
समाम्नायोऽसमाम्नायस्तीर्थदेवो महारथः ।
निर्जीवो जीवनो मन्त्रश्शुभाक्षो बहुकर्कशः ॥९३॥
रत्नप्रभूतो रक्ताङ्गो महार्णवनिपानवित् ।
मूलं विशालो ह्यमृतो व्यक्ताव्यक्तस्तपोनिधिः ॥९४॥
आरोहणोऽधिरोहश्च शीलधारी महायशा ।
सेनाकल्पो महाकल्पो योगो योगकरो हरिः ॥९५॥
युगरूपो महारूपो महानागहनो वधः ।
न्यायनिर्वपणः पादः पण्डितो ह्यचलोपमः ॥९६॥

बहुमालो महामालश्शशी हरिसुलोचनः ।
विस्तारो लवणः कूपस्त्रियुगः सफलोदयः ॥९७॥
त्रिलोचनो विषण्णांगो मणिविद्धो जटाधरः ।
बिन्दुर्विसर्गस्सुमुखः शरस्सर्वायुधस्सहः ॥९८॥
निवेदनस्सुखाजातः सुगन्धारो महाधनुः ।
गन्धपाली च भगवानुत्थानस्सर्वकर्मणाम् ॥९९॥
मन्थानो बहुलो वायुः सकलस्सर्वलोचनः ।
तलस्तालः करस्थाली ऊर्ध्वसंहननो महान् ॥१००॥
छत्रं सुछत्रो विख्यातो लोकस्सर्वाश्रयः क्रमः ।
मुण्डो विरूपो विकृतो दण्डी कुण्डी विकुर्वणः ॥१०१॥
हर्यक्षः ककुभो वज्री शतजिह्वस्सहस्रपात् ।
सहस्रमूर्धा देवेन्द्रस्सर्वदेवमयो गुरुः ॥१०२॥
सहस्रबाहुस्सर्वाङ्गः शरण्यस्सर्वलोककृत् ।
पवित्रं त्रिककुन्मन्त्रः कनिष्ठः कृष्णपिङ्गलः ॥१०३॥
ब्रह्मदण्डविनिर्माता शतघ्नीपाशशक्तिमान् ।
पद्मगर्भो महागर्भो ब्रह्मगर्भो जलोद्भवः ॥१०४॥
गभस्तिर्ब्रह्मकृद्ब्रह्म ब्रह्मविद्ब्रह्मणो गतिः ।
अनन्तरूपश्चैकात्मा तिग्मतेजास्स्वयम्भुवः ॥१०५॥
ऊर्ध्वगात्मा पशुपतिर्वातरंहा मनोजवः ।
चन्दनी पद्मनालाग्रस्सुरभ्युत्तरणो नरः ॥१०६॥
कर्णिकारमहास्रग्वी नीलमौलिः पिनाकधृद् ।
उमापतिरुमाकान्तो जाह्नवीधृदुमाधवः ॥१०७॥
वरो वराहो वरदो वरेण्यस्सुमहास्वनः ।
महाप्रसादो दमनः शत्रुहा श्वेतपिङ्गलः ॥१०८॥
प्रीतात्मा परमात्मा च प्रयतात्मा प्रधानधृत् ।
सर्वपार्श्वमुखस्त्र्यक्षो धर्मसाधारणो वरः ॥१०९॥
चराचरात्मा सूत्रात्मा अमृतो गोवृषेश्वरः ।
साध्यर्षिर्वसुरादित्यो विवस्वान् सवितामृतः ॥११०॥
व्यासस्सर्गस्सुसंक्षेपो विस्तारः पर्ययो नरः ।
ऋतुस्संवत्सरो मासः पक्षस्संख्यासमापनः ॥१११॥
कला काष्ठा लवो मात्रा मुहूर्ताहःक्षपा क्षणाः ।
विश्वक्षेत्रं प्रजाबीजं लिङ्गमाद्यस्सुनिर्गमः ॥११२॥

सदसद्व्यक्तमव्यक्तं पिता माता पितामहः ।
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥११३॥
निर्वाणं ह्लादनश्चैव ब्रह्मलोकः परागतिः ।
देवासुरविनिर्माता देवासुरपरायणः ॥११४॥
देवासुरगुरुर्देवो देवासुरनमस्कृतः ।
देवासुरमहामात्रो देवासुरगणाश्रयः ॥११५॥
देवासुरगणाध्यक्षो देवासुरगणाग्रणीः ।
देवादिदेवो देवर्षिर्देवासुरवरप्रदः ॥११६॥
देवासुरेश्वरो विश्वो देवासुरमहेश्वरः ।
सर्वदेवमयोऽचिन्त्यो देवतात्मातमसम्भवः ॥११७॥
उद्भित्त्रिविक्रमो वैद्यो विरजो नीरजोऽमरः ।
ईड्यो हस्तीश्वरो व्याघ्रो देवसिंहो नरर्षभः ॥११८॥
विबुधोऽग्रवरस्सूक्ष्मस्सर्वदेवस्तपोमयः ।
सुयुक्तश्शोभनो वज्री प्रासानां प्रभवोऽव्ययः ॥११९॥
गुहः कान्तो निजस्सर्गः पवित्रं सर्वपावनः ।
शृङ्गी शृङ्गप्रियो बभ्रू राजराजो निरामयः ॥१२०॥
अभिरामस्सुरगणो विरामस्सर्वसाधनः ।
ललाटाक्षो विश्वदेवो हरिणो ब्रह्मवर्चसः ॥१२१॥
स्थावराणां पतिश्चैव नियमेन्द्रियवर्धनः ।
सिद्धार्थस्सिद्धभूतार्थोऽचिन्त्यस्सत्यव्रतश्शुचिः ॥१२२॥
व्रताधिपः परं ब्रह्म भक्तानां परमा गतिः ।
विमुक्तो मुक्ततेजाश्च श्रीमान् श्रीवर्धनो जगत् ॥१२३॥

---

यथा प्रधानं भगवानिति भक्त्या स्तुतो मया ।
यं न ब्रह्मादयो देवा विदुस्तत्वेन नर्षयः ॥१२४॥
स्तोतव्यमर्च्यं वन्द्यं च कःस्तोष्यति जगत्पतिं ।
भक्त्या त्वेवं पुरस्कृत्य मया यज्ञपतिर्विभुः ॥१२५॥
ततोऽभ्यनुज्ञां सम्प्राप्य स्तुतो मतिमतां वरः ।
शिवमेभिः स्तुवन् देवं नामाभिः पुष्टिवर्धनः ॥१२६॥
नित्ययुक्तश्शुचिर्भूतः प्राप्नोत्यात्मानमात्मना ।
एतद्धि परमं ब्रह्म परं ब्रह्माधिगच्छति ॥१२७॥
ऋषयश्चैव देवाश्च स्तुवन्त्येतेन तत्पराः ।
स्तूयमानो महादेवस्तुष्यते नियतात्मभिः ॥१२८॥

भक्तानुकम्पी भगवानात्मसंस्थाकरो विभुः ।
तथैव च मनुष्येषु ये मनुष्याः प्रधानतः ॥१२९॥
आस्तिका श्रद्दधानाश्च बहुभिर्जन्मभिस्स्तवैः ।
भक्त्या ह्यनन्यमीशानं परं देवं सनातनम् ॥१३०॥
कर्मणा मनसा वाचा भावेनामिततेजसः ।
शयाना जाग्रमाणाश्च व्रजन्नुपविशंस्तथा ॥१३१॥
उन्मिषन्निमिषंश्चैव चिन्तयन्तः पुनः पुनः ।
शृण्वन्तश्श्रावयन्तश्च कथयन्तश्च ते भवम् ॥१३२॥
स्तुवन्तस्स्तूयमानाश्च तुष्यन्ति च रमन्ति च ।
जन्मकोटिसहस्रेषु नानासंसारयोनिषु ॥१३३॥
जन्तोर्विगतपापस्य भवे भक्तिः प्रजायते ।
उत्पन्ना च भवे भक्तिरनन्या सर्वभावतः ॥१३४॥
भाविनः कारणं चास्य सर्वमुक्तस्य सर्वदा ।
एतद्देवेषु दुष्प्रापं मनुष्येषु न लभ्यते ॥१३५॥
निर्विघ्ना निर्मला रुद्रे भक्तिरव्यभिचारिणी ।
तस्यैव च प्रसादेन भक्तिरुत्पद्यते नृणाम् ॥१३६॥
येन याति परां सिद्धिं तद्भावगतचेतसः ।
ये सर्वभावानुगताः प्रपद्यन्ते महेश्वरम् ॥१३७॥
प्रपन्नवत्सलो देवस्संसारात्तान् समुद्धरेत् ।
एवमन्ये निकुर्वन्ति देवास्संसारमोचनम् ॥१३८॥
मनुष्याणामृते देवं नान्या शक्तिस्तपोबलम् ।
इति तेनेन्द्रकल्पेन भगवान् सदसत्पतिः ॥१३९॥
कृत्तिवासास्सुतः कृष्णतण्डिना शुभबुद्धिना ।
स्तवमेतं भगवतो ब्रह्मा स्वयमधारयत् ॥१४०॥
गीयते च स बुध्येत ब्रह्मशंकरसन्निधौ ।
इदं पुण्यं पवित्रं च सर्वदा पापनाशनम् ॥१४१॥
योगदं मोक्षदं चैव स्वर्गदं तोषदं तथा ।
एवमेतत्पठन्ते य एकभक्त्या तु शंकरम् ॥१४२॥
या गतिस्सांख्ययोगानां व्रजन्तं तां गतिस्तथा ।
स्तवमेनं प्रयत्नेन सदा रुद्रस्य सन्निधौ ॥१४३॥
अब्दमेकं चरेद्भक्तः प्राप्नुयादीप्सितं फलम् ।
एतद्रहस्यं परमं ब्रह्मणो हृदि संस्थितम् ॥१४४॥

ब्रह्मा प्रोवाच शक्राय शक्रः प्रोवाच मृत्यवे ।
मृत्युः प्रोवाच रुद्रेभ्यो रुद्रेभ्यस्तण्डिमागमत् ॥१४५॥

महता तपसा प्राप्तं तण्डिना ब्रह्मसद्मनि ।
तण्डिः प्रोवाच शुक्राय गौतमाय च भार्गवः ॥१४६॥

वैवस्वताय मनवे गौतमः प्राह माधव ।
नारायणाय साध्याय मनुरिष्टाय धीमते ॥१४७॥

यमाय प्राह भगवान् साध्यो नारायणोऽच्युतः ।
नाचिकेताय भगवानाह वैवस्वतो यमः ॥१४८॥

मार्कण्डेयाय वार्ष्णेय नाचिकेतोऽभ्यभाषत ।
मार्कण्डेयान्मया प्राप्तो नियमेन जनार्दन ॥१४९॥

तवाप्यहममित्रघ्न स्तवं दद्यां ह्यविश्रुतम् ।
स्वर्ग्यमारोग्यमायुष्यं धन्यं वेदेन सम्मितन् ॥१५०॥

नास्य विघ्नं विकुर्वन्ति दानवा यक्षराक्षसाः ।
पिशाचा यातुधाना वा गुह्यका भुजगा अपि ॥१५१॥

यः पठेत शुचिः पार्थ ! ब्रह्मचारी जितेन्द्रियः ।
अभग्नयोगो वर्षं तु सोऽश्वमेधफलं लभेत् ॥१५२॥

इति श्रीशिवसहस्रनामस्तोत्ररत्नं संपूर्णम् ।

•

## श्रीविष्णुसहस्रनामस्तोत्रम्

यस्य स्मरणमात्रेण जन्मसंसारबन्धनात् ।
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे ॥
नमः समस्तभूतानामादिभूताय भूभृते ।
अनेकरूपरूपाय विष्णवे प्रभविष्णवे ॥

वैशम्पायन उवाच

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।
युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥ १ ॥

युधिष्ठिर उवाच

किमेकं दैवतं लोके किं वाप्येकं परायणम् ।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥ २ ॥
को धर्मः सर्वधर्माणां भवतः परमो मतः ।
किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ ३ ॥

भीष्म उवाच

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥ ४ ॥
तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायन्स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥ ५ ॥
अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥ ६ ॥
ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ ७ ॥
एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥ ८ ॥
परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ॥ ९ ॥
पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥१०॥
यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥११॥
तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥१२॥

यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥१३॥
ॐ
विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥१४॥
पूतात्मा परमात्मा च मुक्तानां परमा गतिः ।
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥१५॥
योगो योगविदां नेता प्रधानपुरुषेश्वरः ।
नारसिंहवपुः श्रीमान्केशवः पुरुषोत्तमः ॥१६॥
सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।
सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥१८॥
स्वयम्भूः शम्भुरादित्यः पुष्कराक्षो महास्वनः ।
अनादिनिधनो धाता विधाता धातुरुत्तमः ॥१८॥
अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥१९॥
अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।
प्रभूतस्त्रिककुब्धाम पवित्रं मङ्गलं परम् ॥२०॥
ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥२१॥
ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥२२॥
सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः ।
अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥२३॥
अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।
वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः ॥२४॥
वसुर्वसुमनाः सत्यः समात्मा सम्मितः समः ।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥२५॥
रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः ।
अमृतः शाश्वतस्थाणुर्वरारोहो महातपाः ॥२६॥
सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित्कविः ॥२७॥
लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः ।
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥२८॥

भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ।
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥२९॥
उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः ।
अतीन्द्रः संग्रहः सर्गो धृतात्मा नियमो यमः ॥३०॥
वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ।
अतीन्द्रियो महामायो महोत्साहो महाबलः ॥३१॥
महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ।
अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक् ॥३२॥
महेष्वासो महीभर्ता श्रीनिवासः सतां गतिः ।
अनिरुद्धः सुरानन्दो गोविन्दो गोविदां पतिः ॥३३॥
मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ।
हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥३४॥
अमृत्युः सर्वदृक् सिंहः संधाता संधिमान्स्थिरः ।
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥३५॥
गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः ।
निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥३६॥
अग्रणीर्ग्रामणीः श्रीमान्न्यायो नेता समीरणः ।
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥३७॥
आवर्तनो निवृत्तात्मा संवृतः सम्प्रमर्दनः ।
अहः संवर्तको वह्निरनिलो धरणीधरः ॥३८॥
सुप्रसादः प्रसन्नात्मा विश्वधृग्विश्वभुग्विभुः ।
सत्कर्ता सत्कृतः साधुर्जह्नुर्नारायणो नरः ॥३९॥
असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः ।
सिद्धार्थः सिद्धसंकल्पः सिद्धिदः सिद्धिसाधनः ॥४०॥
वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः ।
वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ॥४१॥
सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।
नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥४२॥
ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ।
ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥४३॥
अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः ।
औषधं जगतः सेतुः सत्यधर्मपराक्रमः ॥४४॥

भूतभव्यभवन्नाथः पवनः पावनोऽनलः ।
कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः ॥४५॥
युगादिकृद्युगावर्तो नैकमायो महाशनः ।
अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥४६॥
इष्टोऽविशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः ।
क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥४७॥
अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।
अपां निधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥४८॥
स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः ।
वासुदेवो बृहद्भानुरादिदेवः पुरंदरः ॥४९॥
अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः ।
अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः ॥५०॥
पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ।
महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥५१॥
अतुलः शरभो भीमः समयज्ञो हविर्हरिः ।
सर्वलक्षणलक्षण्यो लक्ष्मीवान्समितिञ्जयः ॥५२॥
विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः ।
महीधरो महाभागो वेगवानमिताशनः ॥५३॥
उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ।
करणं कारणं कर्ता विकर्ता गहनो गुहः ॥५४॥
व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ।
परर्द्धिः परमस्पष्टस्तुष्टः पुष्टः शुभेक्षणः ॥५५॥
रामो विरामो विरजो मार्गो नेयो नयोऽनयः ।
वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥५६॥
वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः ।
हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥५७॥
ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ।
उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥५८॥
विस्तारः स्थावरस्थाणुः प्रमाणं बीजमव्ययम् ।
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥५९॥
अनिर्विण्णः स्थविष्ठोऽभूर्धर्मयूपो महामखः ।
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ॥६०॥

यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः ।
सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥६१॥
सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् ।
मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥६२॥
स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत् ।
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥६३॥
धर्मगुब्धर्मकृद्धर्मी सदसत्क्षरमक्षरम् ।
अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ॥६४॥
गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः ।
आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥६५॥
उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ॥६६॥
सोमपोऽमृतपः सोमः पुरुजित्पुरुसत्तमः ।
विनयो जयः सत्यसंधो दाशार्हः सात्वतां पतिः ॥६७॥
जीवो विनयितासाक्षी मुकुन्दोऽमितविक्रमः ।
अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥६८॥
अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।
आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ॥६९॥
महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ।
त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥७०॥
महावराहो गोविन्दः सुषेणः कनकाङ्गदी ।
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥७१॥
वेधाः स्वाङ्गोऽजितः कृष्णो दृढः संकर्षणोऽच्युतः ।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥७२॥
भगवान् भगहानन्दी वनमाली हलायुधः ।
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥७३॥
सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः ।
दिविस्पृक्सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥७४॥
त्रिसामा सामगः साम निर्वाणं भेषजं भिषक् ।
संन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम् ॥७५॥
शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥७६॥

अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः ।
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः ॥७७॥
श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः ।
श्रीधरः श्रीकरः श्रेयः श्रीमाँल्लोकत्रयाश्रयः ॥७८॥
स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।
विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥७९॥

उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतस्थिरः ।
भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ॥८०॥
अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः ।
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥८१॥
कालनेमिनिहा वीरः शौरिः शूरजनेश्वरः ।
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥८२॥

कामदेवः कामपालः कामी कान्तः कृतागमः ।
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनंजयः ॥८३॥
ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ।
ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥८४॥
महाक्रमो महाकर्मा महातेजा महोरगः ।
महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥८५॥
स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः ।
पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥८६॥
मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ।
वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥८७॥
सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः ।
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥८८॥
भूतावासो वासुदेवः सर्वासुनिलयोऽनलः ।
दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥८९॥
विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ।
अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥९०॥

एको नैकः सवः कः किं यत्तत्पदमनुत्तमम् ।
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥९१॥
सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।
वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥९२॥

अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक् ।
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥९३॥
तेजोवृषो द्युतिधरः सर्वशस्त्रभृतां वरः ।
प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः ॥९४॥
चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ।
चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥९५॥

समावर्तोऽनिवृत्तात्मा दुर्जयो दुरतिक्रमः ।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥९६॥
शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः ।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ॥९७॥
उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः ।
अर्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी ॥९८॥
सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः ।
महाह्रदो महागर्तो महाभूतो महानिधिः ॥९९॥
कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनोऽनिलः ।
अमृताशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥१००॥
सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ।
न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः ॥१०१॥
सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ।
आमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः ॥१०२॥

अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान् ।
अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्द्धनः ॥१०३॥
भारभृत्कथितो योगी योगीशः सर्वकामदः ।
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः ॥ ०४॥
धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः ।
अपराजितः सर्वसहो नियन्ता नियमो यमः ॥१०५॥
सत्त्ववान्सात्त्विकः सत्यः सत्यधर्मपरायणः ।
अभिप्रायः प्रियार्होऽर्हः प्रियकृत्प्रीतिवर्धनः ॥१०६॥

विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः ।
रविर्विरोचनः सूर्यः सविता रविलोचनः ॥१०७॥
अनन्तो हुतभुग्भोक्ता सुखदो नैकजोऽग्रजः ।
अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः ॥१०८॥

सनात्सनातनतमः कपिलः कपिरव्ययः।
स्वस्तिदः स्वस्तिकृत्स्वस्ति स्वस्तिभुक्स्वस्तिदक्षिणः ॥१०९॥
अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः।
शब्दातिगः शब्दसहः शिशिर शर्वरीकरः ॥११०॥
अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥१११॥
उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः।
वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः ॥११२॥
अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ।
चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥११३
अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः।
जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥११४॥
आधारनिलयो धाता पुष्पहासः प्रजागरः।
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥११५॥
प्रमाणं प्राणनिलयः प्राणभृत्प्राणजीवनः।
तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥११६॥
भूर्भुवःस्वस्तरुस्तारः सविता प्रपितामहः।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥११७॥
यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः।
यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च ॥११८॥
आत्मयोनिः स्वयंजातो वैखानः सामगायनः।
देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥११९॥
शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः।
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥१२०॥

॥ सर्वप्रहरणायुध ॐ नम इति ॥

इतीदं कीर्तनीयस्य केशवस्य महात्मनः।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥१२१॥
य इदं श‍ृणुयान्नित्यं यश्चापि परिकीर्तयेत्।
नाशुभं प्राप्नुयात्किञ्चित्सोऽमुत्रेह च मानवः ॥१२२॥
वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत्।
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥१२३॥

धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ।
कामानवाप्नुयात्कामी प्रजार्थी प्राप्नुयात्प्रजाम् ॥१२४॥
भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः ।
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥१२५॥
यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च ।
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥१२६॥
न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।
भवत्यरोगो द्युतिमान्बलरूपगुणान्वितः ॥१२७॥
रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥१२८॥
दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥१२९॥
वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥१३०॥
न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥१३१॥
इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ।
युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥१३२॥
न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥१३३॥
द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥१३४॥
ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥१३५॥
इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥१३६॥
सर्वागमानामाचारः प्रथमं परिकल्पते ।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥१३७॥
ऋषयः पितरो देवा महाभूतानि धातवः ।
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥१३८॥
योगो ज्ञानं तथा सांख्यं विद्याः शिल्पादि कर्म च ।
वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥१३९॥

एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।
त्रींल्लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥१४०॥

इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।
पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥१४१॥

विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥१४२॥

ॐ तत्सदिति श्रीमहाभारते शतसाहस्र्यां संहितायां
वैयासिक्यामानुशासनिके पर्वणि भीष्मयुधिष्ठिरसंवादे
श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रम् ॥

•

# ललितासहस्रनामस्तोत्रम्

❀ उपोद्घाताख्या प्रथमा कला ❀

त्रिपुरां कुलनिधिमीडेऽरुणश्रियं कामराजविद्धाङ्गीम् ।
त्रिगुणैर्देवैर्निनुतामेकान्तां बिन्दुगां महारम्भाम् ॥ १ ॥

ललितानामसहस्त्रे छलार्णसूत्रानुयायिन्यः ।
परिजाषा भाष्यन्ते संक्षेपात्कौलिकप्रमोदाय ॥ २ ॥
पञ्चाशदेक आदौ नाससु सार्धद्व्यशीतिशतम् ।
षडशीतिः सार्धान्ते सर्वे विंशतिशतत्रयं श्लोकाः ॥ ३ ॥
दशभूः सार्धनृपाला अध्युष्टं सार्धनवषडध्युष्टम् ।
मुनिसूतहयाम्बाश्वोक्तिर्ध्यानमेकेन ॥ ४ ॥

॥ अगस्त्य उवाच ॥

अश्वानन महाबुद्धे सर्वशास्त्रविशारद ।
कथितं ललितादेव्याश्चरितं परमाद्भुतम् ॥ १ ॥
पूर्वं प्रादुर्भवो मातुस्ततः पट्टाभिषेचनम् ।
भण्डासुरवधश्चैव विस्तरेण त्वोयदितः ॥ २ ॥
वर्णितं श्रीपुरं चापि महाविभवविस्तरम् ।
श्रीमत्पञ्चदशाक्षर्या महिमा वर्णितस्था ॥ ३ ॥
षोढान्यासादयो न्यासा न्यासखण्डे समीरिताः ॥ ४ ॥
अन्तर्यागक्रमश्चैव बहिर्यागक्रमस्तथा ।
महायागक्रमश्चैव पूजाखण्डे प्रकीर्तितः ॥ ५ ॥
पुरश्चरणखण्डे तु जपलक्षणमीरितम् ।
होमखण्डे त्वया प्रोक्तो होमद्रव्यविधिक्रमः ॥ ६ ॥
चक्रराजस्य विद्यायाः श्रीदेव्या देशिकात्मनोः ।
रहस्यखण्डे तादाम्यं परस्परमुदीरितम् ।
स्तोत्रखण्डे बहुविधाः स्तुतयः परिकीर्तिताः ॥ ७ ॥
मन्त्रिणीदण्डिनीदेव्योः प्रोक्ते नामसहस्रके ।
नतु श्रीललितादेव्याः प्रोक्तं नामसहस्रकम् ॥ ८ ॥
तत्र मे संशयो जातो हयग्रीव दयानिधे ।
किंवा त्वया विस्मृतं तज्ज्ञात्वा वा समुपेक्षितम् ॥ ९ ॥

मम वा योग्यता नास्ति श्रोतुं नामसहस्रकम् ।
किमर्थं भवता नोक्तं तत्र मे कारणं वद ॥१०॥

॥ सूत उवाच ॥

इति पृष्टो हयग्रीवो मुनिना कुम्भजन्मना ।
प्रहृष्टो वचनं प्राह तापसं कुम्भसंभवम् ॥११॥
लोपामुद्रापतेऽगस्त्य सावधानमनाः शृणु ।
नाम्नां सहस्रं यन्नोक्तं कारणं तद्वदामि ते ॥१२॥
रहस्यमिति मत्वाहं नोक्तवांस्ते न चान्यथा ।
पुनश्च पृच्छसे भक्त्या तस्मात्तत्ते वदाम्यहम् ॥१३॥
ब्रूयाच्छिष्याय भक्ताय रहस्यमपि देशिकः ।
भवता न प्रदेयं स्यादभक्ताय कदाचन ॥१४॥
न शठाय न दुष्टाय नाविश्वासाय कर्हिचित् ।
श्रीमातृभक्तियुक्ताय श्रीविद्याराजवेदिने ॥१५॥
उपासकाय शुद्धाय देयं नामसहस्रकम् ।
यानि नामसहस्राणि सद्यःसिद्धिप्रदानि वै ॥१६॥
तन्त्रेषु ललितादेव्यास्तेषु मुख्यमिदं मुने ।
श्रीविद्यैव तु मन्त्राणां तत्र कादिर्यथा परा ॥१७॥
पुराणां श्रीपुरमिव शक्तीनां ललिता यथा ।
श्रीविद्योपासकानां च यथा देवो वरः शिवः ॥१८॥
तथा नामसहस्रेषु वरमेतत्प्रकीर्तितम् ॥१९॥
यथास्य पठनाद्देवी प्रीयते ललिताम्बिका ।
अन्यनामसहस्रस्य पाठान्न प्रीयते तथा ।
श्रीमातुः प्रीतये तस्मादनिशं कीर्तयेदिदम् ॥२०॥
विल्वपत्रैश्चक्रराजे योऽर्चयेल्ललिताम्बिकाम् ।
पद्मैर्वा तुलसीपत्रैरेभिर्नामसहस्रकैः ॥२१॥
सद्यः प्रसादं कुरुते तत्र सिंहासनेश्वरी ।
चक्राधिराजमभ्यर्च्य जप्त्वा पञ्चदशाक्षरीम् ॥२२॥
जपान्ते कीर्तयेन्नित्यमिदं नामसहस्रकम् ।
जपपूजाद्यशक्तोऽपि पठेन्नामसहस्रकम् ॥२३॥
साङ्गार्चने साङ्गजपे यत्फलं तदवाप्नुयात् ।
उपासने स्तुतीरन्याः पठेदभ्युदयो हि सः ॥२४॥
इदं नामसहस्रं तु कीर्तयेन्नित्यकर्मवत् ।
चक्रराजार्चनं देव्या जपो नाम्नां च किर्तनम् ॥२५॥

भक्तस्य कृत्यमेतावदन्यदभ्युदयं विदुः ।
भक्तस्यावश्यकमिदं नामसाहस्रकीर्तनम् ॥२६॥
तत्र हेतुं प्रवक्ष्यामि श्रुणु त्वं कुम्भसंभव ।
पुरा श्रीललितादेवी भक्तानां हितकाम्यया ॥२७॥
वाग्देवीर्वशिनीमुख्याः समाहूयेदमब्रवीत् ।
वाग्देवता वशिन्याद्याः शृणुध्वं वचनं मम ॥२८॥
भवत्यो मत्प्रसादेन प्रोल्लासद्वाग्विभूतयः ।
मद्भक्तानां वाग्विभूतिप्रदाने विनियोजिताः ॥२९॥
मच्चक्रस्य रहस्यज्ञा मम नामपरायणाः ।
मम स्तोत्रविधानाय तस्मादाज्ञापयामि वः ॥३०॥
कुरुध्वमङ्कितं स्तोत्रं मम नामसहस्रकैः ।
येन भक्तैः स्तुताया मे सद्यः प्रीतिः परा भवेत् ॥३१॥

॥ हयग्रीव उवाच ॥

इत्याज्ञप्ता वचो देव्यः श्रीदेव्या ललिताम्बया ।
रहस्यैर्नामभिर्दिव्यैश्चक्रुः स्तोत्रमनुत्तमम् ॥३२॥
रहस्यनामसाहस्रमिति तद्विश्रुतं परम् ।
ततः कदाचित्सदसि स्थित्वा सिंहासनेऽम्बिका ॥३३॥
स्वसेवावसरं प्रादात्सर्वेषां कुम्भसंभव ।
सेवार्थमागतास्तत्र ब्रह्माणीब्रह्मकोटयः ॥३४॥
लक्ष्मीनारायणानां च कोटयः समुपागताः ।
गौरीकोटिसमेतानां रुद्राणामपि कोटयः ॥३५॥
मन्त्रिणीदण्डिनीमुख्याः सेवार्थं याः समागताः ।
शक्तयो विविधाकारास्तासां संख्या न विद्यते ॥३६॥
दिव्यौघा मानवौघाश्च सिद्धौघाश्च समागताः ।
तत्र श्रीललितादेवी सर्वेषां दर्शनं ददौ ॥३७॥
तेषु दृष्टोपविष्टेषु स्वे स्वे स्थाने यथाक्रमम् ।
तत्र श्रीललितादेवीकटाक्षाक्षेपचोदिताः ॥३८॥
उत्थाय वशिनिमुख्या बद्धाञ्जलिपुटास्तदा ।
अस्तुवन्नामसाहस्रैः स्वकृतैर्ललिताम्बिकाम् ॥३९॥
श्रुत्वा स्तवं प्रसन्नाऽभूल्ललिता परमेश्वरी ।
सर्वे ते विस्मयं जग्मुर्ये यत्र सदसि स्थिताः ॥४०॥
ततः प्रोवाच ललिता सदस्यान्देवतागणान् ।
ममाज्ञयैव वाग्देव्यश्चक्रुः स्तोत्रमनुत्तमम् ॥४१॥

अङ्कितं नामभिर्दिव्यैर्मम प्रीतिविधायकैः ॥४२॥
तत्पठध्वं सदा यूयं स्तोत्रं मत्प्रीतिवृद्धये ।
प्रवर्तयध्वं भक्तेषु मम नामसहस्रकम् ॥४३॥
इदं नामसहस्रं मे यो भक्तः पठते सकृत् ।
स मे प्रियतमो ज्ञेयस्तस्मै कामान्ददाम्यहम् ॥४४॥
श्रीचक्रे मां समभ्यर्च्य जप्त्वा पञ्चदशाक्षरीम् ।
पश्चान्नामसहस्रं मे कीर्तयेन्मम तुष्टये ॥४५॥
ममार्चयतु वा मा वा विद्यां जपतु वा न वा ।
कीर्तयेन्नामसाहस्रमिदं मत्प्रीतये सदा ॥४६॥
मत्प्रीत्या सकलान्कामाँल्लभते नात्र संशयः ।
तस्मान्नामसहस्रं मे कीर्तयध्वं सदादरात् ॥४७॥
॥ हयग्रीव उवाच ॥
इति श्रीललितेशानी शास्ति देवान्सहानुगान् ॥४८॥
तदाज्ञया तदारभ्य ब्रह्मविष्णुमहेश्वराः ।
शक्तयो मन्त्रिणीमुख्या इदं नामसहस्रकम् ॥४९॥
पठन्ति भक्त्या सततं ललितापरितुष्टये ।
तस्मादवश्यं भक्तेन कीर्तनीयमिदं मुने ॥५०॥
आवश्यकत्वे हेतुत्वे मया प्रोक्तो मुनीश्वर ।
इदानीं नामसाहस्रं वक्ष्यामि श्रद्धया श्रृणु ॥५१॥

इति ललितासहस्रनाम्न्युपोद्घातप्रकरणं समाप्तम् ॥

अस्य श्रीललितासहस्रनामस्तोत्रमहामन्त्रस्य वषिन्यादयो वाग्देवताऋषयः, अनुष्टुप् छन्दः, महात्रिपुरसुंदरी देवता, श्रीमद्वाग्भवकूटेति बीजम्, मध्यकूटेति शक्तिः, शक्तिकूटेति कीलकम्, मूलप्रकृतिरिति स्वरूपम्, श्रीललितात्रिपुरसुन्दरीप्रसादसिद्धिद्वारा चिन्तितफलावाप्त्यर्थं जपे विनियोगः ।

॥ अथ ध्यानम् ॥

सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुरत्
तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम् ।
पाणिभ्यामलिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं
सौम्यां रत्नघटस्थरक्तचरणां ध्यायेत्परामम्बिकाम् ॥

❀ द्वितीया तापिनी कला ❀

श्रीमाता श्रीमहाराज्ञी श्रीमत्सिंहासनेश्वरी ।
चिदग्निकुण्डसंभूता देवकार्यसमुद्यता ॥५२॥

उद्यद्भानुसहस्राभा चतुर्बाहुसमन्विता ।
रागस्वरूपपाशाढ्या क्रोधाकाराङ्कुशोज्ज्वला ॥५३॥
मनोरूपेक्षुकोदण्डा पञ्चतन्मात्रसायका ।
निजारुणप्रभापूरमज्जद्ब्रह्माण्डमण्डला ॥५४॥
चम्पकाशोकपुन्नागसौगन्धिकलसत्कचा ।
कुरुविन्दमणिश्रेणीकनत्कोटीरमण्डिता ॥५५॥
अष्टमीचन्द्रविभ्राजदलिकस्थलशोभिता ।
मुखचन्द्रकलङ्काभमृगनाभिविशेषका ॥५६॥
वदनस्मरमाङ्गल्यगृहतोरणचिल्लिका ।
वक्त्रलक्ष्मीपरीवाहचलन्मीनाभलोचना ॥५७॥
नवचम्पकपुष्पाभनासादण्डविराजिता ।
ताराकान्तितिरस्कारिनासाभरणभासुरा ॥५८॥
कदम्बमञ्जरीक्लृप्तकर्णपूरमनोहरा ।
ताटङ्कयुगलीभूततपनोडुपमण्डला ॥५९॥
पद्मरागशिलादर्शपरिभाविकपोलभूः ।
नवविद्रुमबिम्बश्रीन्यक्कारिरदनच्छदा ॥६०॥
शुद्धविद्याङ्कुराकारद्विजपङ्क्तिद्वयोज्ज्वला ।
कर्पूरवीटिकामोदसमाकर्षिदिगन्तरा ॥६१॥
निजसंलापमाधुर्यविनिर्भर्त्सितकच्छपी ।
मन्दस्मितप्रभापूरमज्जत्कामेशमानसा ॥६२॥
अनाकलितसादृश्यचिबुकश्रीविराजिता ।
कामेशबद्धमाङ्गल्यसूत्रशोभितकन्धरा ॥६३॥
कनकाङ्गदकेयूरकमनीयभुजान्विता ।
रत्नग्रैवेयचिन्ताकलोलमुक्ताफलान्विता ॥६४॥
कामेश्वरप्रेमरत्नमणिप्रतिपणस्तनी ।
नाभ्यालवालरोमालिलताफलकुचद्वयी ॥६५॥
लक्ष्यरोमलताधारतासमुन्नेयमध्यमा ।
स्तनभारदलन्मध्यपट्टबन्धवलित्रया ॥६६॥
अरुणारुणकौसुम्भवस्त्रभास्वत्कटीतटी ।
रत्नकिङ्किणिकारम्यरशनादामभूषिता ॥६७॥
कामेशज्ञातसौभाग्यमार्दवोरुद्वयान्विता ।
माणिक्यमुकुटाकारजानुद्वयविराजिता ॥६८॥

